श्रीगणेशायनमः ॥ ॥ यस्यज्ञानदयासिंधोरगाधस्यानघागुणाः ॥ सेव्यतामक्षयोधीराः सश्रियेचामृतायच ॥१॥ समाहृत्यान्यतंत्राणिसंक्षिप्तैः प्रतिसंस्कृतैः ॥ संपूर्णमुच्यतेवर्गैर्नामलिंगानुशासनं ॥२॥ प्रायशोरूपभेदेनसाहचर्याच्चकुत्रचित् ॥ स्त्रीपुन्नपुंसकंज्ञेयंतद्विशेषविधेः क्वचित् ॥३॥ भेदाख्यानायनद्वंद्वोनैकशेषोनसंकरः ॥ कृतोत्रभिन्नलिंगानामनुक्तानांक्रमादृते ॥४॥ त्रिलिंग्यांत्रिष्विनिपदंमिथुनेतुद्वयोरिति ॥ निषिद्धलिंगंशेषार्थंत्वंताथादिनपूर्वभाक् ॥५॥ स्वरव्ययंस्वर्गनाकत्रिदिवत्रिदशालयाः ॥ सुरलोकोद्योदिवौद्वेस्त्रियांक्लीबेत्रिविष्टपम् ॥६॥ अमरानिर्जरादेवास्त्रिदशाविबुधाः सुराः ॥ सुपर्वाणः सुमनसस्त्रिदिवेशादिवौकसः ॥७॥ आदितेयादिविषदोलेखाअदितिनंदनाः ॥ आदित्याऋभवोऽस्वप्ना अमर्त्याअमृतांधसः ॥८॥ बर्हिर्मुखाः क्रतुभुजोगीर्वाणादानवारयः ॥ वृंदारकादैवतानिपुंसिवादेवताःस्त्रियाम् ॥९॥ आदित्यविश्ववसवस्तुषिताभास्वरानिलाः ॥ महाराजिकसाध्याश्चरुद्राश्चगणदेवताः ॥१०॥ विद्याधराप्सरोयक्षरक्षोगंधर्वकिन्नराः ॥ पिशाचोगुह्यकः सिद्धोभूतोमीदेवयोनयः ॥११॥ असुरादैत्यदैतेयदनुजेंद्रारिदानवाः ॥ शुक्रशिष्यादितिसुताः पूर्वदेवाः सुरद्विषः ॥ १२॥ सर्वज्ञः सुगतोबुद्धोधर्मराजस्तथागतः ॥ समंतभद्रोभगवान्मारजिल्लोकजिज्जिनः ॥१३॥ षडभिज्ञोदशबलोद्वयवादीविनायकः ॥ मुनींद्रः श्रीघनः शास्तामुनिः शाक्यमुनिस्तुयः ॥१४॥ सशाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्चसः ॥ गौतमश्चार्कबंधुश्चमायादेवीसुतश्चसः ॥१५॥ ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठीपितामहः ॥ हिरण्यगर्भोलोकेशः स्वयंभूश्चतुराननः ॥१६॥ धाताब्जयोनिर्द्रुहिणोविरिंचिः कमलासनः ॥ स्रष्टाप्रजापतिर्वेधाविधाताविश्वसृड्विधिः ॥१७॥ "नाभिजन्मांडजः पूर्वोनिधनः कमलोद्भवः ॥ सदानंदोरजोमूर्तिः सत्यकोहंसवाहनः ॥" १८॥ विष्णुर्नारायणः कृष्णोवैकुंठोविष्टरश्रवाः ॥ दामोदरोहृषीकेशः केशवोमाधवः स्वभूः ॥१९॥ दैत्यारिः पुंडरीकाक्षोगोविंदोगरुडध्वजः ॥ पीतांबरोऽच्युतः शार्ङ्गीविष्वक्सेनोजनार्दनः ॥२०॥ उपेंद्रइंद्रावरजश्चक्रपाणिश्चतुर्भुजः ॥ पद्मनाभोमधुरिपुर्वासुदेवस्त्रिविक्रमः ॥२१॥ देवकीनंदनः शौरिः श्रीपतिः पुरुषोत्तमः ॥ वनमालीबलिध्वंसीकंसारातिरधोक्षजः ॥२१॥ विश्वंभरः कैटभजिद्विधुः श्रीवत्सलांछनः ॥ पुराणपुरुषोयज्ञपुरुषोनरकांतकः ॥२३॥ जलशायीविश्वरूपोमुकुंदोमुरमर्दनः ॥ वसुदेवोस्यजनकः सएवानकदुंदुभिः ॥२४॥ बलभद्रः प्रलंबघ्नोबलदेवोऽच्युताग्रजः ॥ रेवतीरमणोरामः कामपालोहलायुधः ॥२५॥ नीलांबरोरौहिणेयस्तालांकोमुसलीहली ॥ संकर्षणः सीरपाणिः कालिंदीभेदनोबलः ॥२६॥ मदनोमन्मथोमारः प्रद्युम्नोमीनकेतनः ॥ कंदर्पोदर्पकोऽनंगः कामः पंचशरः स्मरः ॥२७॥ शंबरारिर्मनसिजः कुसुमेषुरनन्यजः ॥ पुष्पधन्वारतिपतिर्मकरध्वजआत्मभूः ॥२८॥ ब्रह्मसूर्ऋष्यकेतुः स्यादनिरुद्धउषापतिः ॥ लक्ष्मीः पद्मालयापद्माकमलाश्रीर्हरिप्रिया ॥२९॥ इंदिरालोकमातामाक्षीरोदतनयारमा ॥ शंखोलक्ष्मीपतेः पांचजन्यश्चक्रंसुदर्शनं ॥ ३०॥ कौमोदकीगदाखड्गोनंदकः कौस्तुभोमणिः ॥ चापः शार्ङ्गंमुरारेस्तुश्रीवत्सोलांछनंस्मृतम् ॥ ३१॥ " अश्वाश्चशैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ सारथिर्दारुकोमंत्रीत्युद्धवोवनजोगजः ॥३२॥"

गरुत्मान्गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ॥ नागांतको विष्णुरथः सुपर्णः पन्नगाशनः ॥३३॥ शंभुरीशः पशुपतिः शिवः शूली महेश्वरः
॥ ईश्वरः शर्व ईशानः शंकरश्चंद्रशेखरः ॥३४॥ भूतेशः खंडपरशुर्गिरीशो गिरिशो मृडः ॥ मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥३५
॥ उग्रः कपर्दी श्रीकंठः शितिकंठः कपालभृत् ॥ वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥३६॥ कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहि
तः ॥ हरः स्मरहरो भर्गस्त्र्यंबकस्त्रिपुरांतकः ॥ ३७॥ गंगाधरोंधकरिपुः क्रतुध्वंसी वृषध्वजः ॥ व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः
॥३८॥ " अहिर्बुध्न्यो ऽष्टमूर्तिश्च गजारिश्च महानटः ॥ " कपर्दोस्य जटाजूटः पिनाकोजगवं धनुः ॥३९॥ प्रमथाः स्युः पारिषदा ब्राह्मी
त्याद्यास्तु मातरः ॥ विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ॥ उमा कात्यायनी गौरी काली हैमवतीश्वरी ॥ ४०॥ शिवा भवानी रुद्राणी श
र्वाणी सर्वमंगला ॥ अपर्णा पार्वती दुर्गा मृडानी चंडिकांबिका ॥४१॥ आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ॥ विनायको विघ्नरा-
जद्वैमातुरगणाधिपाः ॥ ४२॥ अप्येकदंतहेरंबलंबोदरगजाननाः ॥ कार्तिकेयो महासेनः शरजन्मा षडाननः ॥ ४३॥ पार्वतीनंदन
स्कंदः सेनानीरग्निभूर्गुहः ॥ बाहुलेयस्तारकजिद्विशाखः शिखिवाहनः ॥ ४४ ॥ षाण्मातुरः शक्तिधरः कुमारः क्रौंचदारणः ॥ शृंगी
भृंगी रिटिस्तुंडी नंदिको नंदिकेश्वरः ॥ ॥४५॥ " कर्ममोटी तु चामुंडा चर्ममुंडा तु चर्चिका ॥ " इंद्रो मरुत्वान्मघवा बिडौजाः पाकशा
सनः ॥ वृद्धश्रवाः शुनासीरः पुरुहूतः पुरंदरः ॥ ४६॥ जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ॥ सुत्रामा गोत्रभिद्वज्री वासवो वृत्र



हा वृषा ॥ ४७ ॥ वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ॥ जंभभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४८ ॥ संक्रंदनो दुश्च्यवनस्तु
राषाण्मेघवाहनः ॥ आखंडलः सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया ॥ ४९ ॥ पुलोमजा शचीद्राणी नगरी त्वमरावती ॥ हय उच्चैःश्रवाः सूतो
मातलिर्नंदनं वनं ॥ ५० ॥ स्यात्प्रासादो वैजयंतो जयंतः पाकशासनिः ॥ ऐरावतोभ्रमातंगैरावणाभ्रमुवल्लभाः ॥ ५१ ॥ ह्रादिनी वज्रम
स्त्री स्यात्कुलिशं भिदुरं पविः ॥ शतकोटिः स्वरुः शंबो दंभोलिरशनिर्द्वयोः ॥ ५२ ॥ व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः ॥ स्यात्सुधर्मा
देवसभा पीयूषममृतं सुधा ॥ ५३ ॥ मंदाकिनी वियद्गंगा स्वर्णदी सुरदीर्घिका ॥ मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ५४ ॥ पंचैते
देवतरवो मंदारः पारिजातकः ॥ संतानः कल्पवृक्षश्च पुंसि वा हरिचंदनम् ॥ ५५ ॥ सनत्कुमारो वैधात्रः स्वर्वैद्यावश्विनीसुतौ ॥ नासत्यावु
श्विनौ दस्रावाश्विनेयौ च तावुभौ ॥ ५६ ॥ स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ॥ हाहा हूहूश्चैवमाद्या गंधर्वास्त्रिदिवौकसाम् ॥
५७ ॥ अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः ॥ कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५८ ॥ बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश
उषर्बुधः ॥ आश्रयाशो बृहद्भानुः कृशानुः पावकोनलः ॥ ५९ ॥ रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ॥ हिरण्यरेता हुतभुग्द
हनो हव्यवाहनः ॥ ६० ॥ सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ॥ शुचिरप्पित्तमौर्वस्तु वाडवो वडवानलः ॥ ६१ ॥ वह्नेर्द्वयोर्ज्वालकीलाव
र्चिर्हेतिः शिखास्त्रियाम् ॥ त्रिषु स्फुलिंगोग्निकणः संतापः संज्वरः समौ ॥ ६२ ॥ " उल्कास्यान्निर्गतज्वाला भूतिर्भसित भस्मनी ॥ क्षा

गोरक्षाचदावस्तुदवोवनहुताशनः ॥१॥'' धर्मराजः पितृपतिः समवर्ती परेतराट् ॥ कृतांतोयमुनाभ्राताशमनोयमराड्यमः ॥६३॥ का
लोदंडधरः श्राद्धदेवोवैवस्वतोंऽतकः ॥ राक्षसः कौणपः क्रव्यात्क्रव्यादोऽस्रपआशरः ॥६४॥ रात्रिंचरोरात्रिचरः कर्बुरोनिकषात्मजः॥
यातुधानः पुण्यजनोनैर्ऋतोयातुरक्षसी ॥६५॥ प्रचेतावरुणः पाशी यादसांपतिरप्पतिः ॥ श्वसनः स्पर्शनोवायुर्मातरिश्वा सदाग
तिः ॥६६॥ पृषदश्वोगंधवहोगंधवाहानिलाशुगाः ॥ समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥६७॥ नभस्वद्वातपवनपवमानप्र
भंजनाः ॥ प्रकंपनोमहावातोझंझावातः सवृष्टिकः ॥६८॥ प्राणोपानः समानश्चोदानव्यानौचवायवः ॥ शरीरस्थाइमेरंहस्तरसीतु
रयस्यदः ॥६९॥ जवोथशीघ्रंत्वरितंलघुक्षिप्रमरंद्रुतम् ॥ सत्वरंचपलंतूर्णमविलंबितमाशुच ॥७०॥ सततेनारताश्रांतसंततावि र
तानिशं ॥ नित्यानवरताजस्रमप्यथातिशयोभरः ॥७१॥ अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥ तीव्रैकांतनितांतानिगाढबा
ढदृढानिच ॥७२॥ क्लीबेशीघ्राद्यसत्वेस्यात्त्रिष्वेषांसत्वगामियत् ॥ कुबेरस्त्र्यंबकसखोयक्षराड्गुह्यकेश्वरः ॥७३॥ मनुष्यधर्माधन
दोराजराजोधनाधिपः ॥ किन्नरेशोवैश्रवणः पौलस्त्योनरवाहनः ॥७४॥ यक्षैकपिंगैलविलश्रीदपुण्यजनेश्वराः ॥ अस्योद्यानंचैत्र
रथंपुत्रस्तुनलकूबरः ॥ ७५॥ कैलासस्थानमलकापूर्विमानंतुपुष्पकं ॥ स्यात्किन्नरः किंपुरुषस्तुरंगवदनोमयुः ॥७६॥ निधिर्नाशेव-
धिर्भेदाः पद्मशंखादयोनिधेः ॥ ॥ इतिस्वर्गवर्गः ॥ ॥ द्योदिवौद्वेस्त्रियामभ्रंव्योमपुष्करमंबरम् ॥ नभोंतरिक्षंगगनमनं

सत्व

तंसुरवर्त्मखं ॥१॥ वियद्विष्णुपदंवातुपुंस्याकाशविहायसी ॥ विहायसोपिनाकोपिद्युरपिस्यात्तदव्ययम् ॥२॥ ''तारापथोंतरि
क्षंचमेघाध्वाचमहाबिलम् ॥'' ॥ इतिव्योमवर्गः ॥ ॥ दिशस्तुककुभः काष्ठाआशाश्चहरितश्चताः ॥ प्राच्यवाचीप्रतीच्यस्ताः
पूर्वदक्षिणपश्चिमाः ॥१॥ उत्तरादिगुदीचीस्याद्दिश्यंतुत्रिषुदिग्भवे ॥ ''अवाग्भवमवाचीनमुदीचीनमुदग्भवं ॥ प्रत्यग्भवंप्रतीचीनं
प्राचीनंप्राग्भवंत्रिषु ॥१॥'' इंद्रोवन्हिः पितृपतिर्नैर्ऋतोवरुणोमरुत् ॥२॥ कुबेरईशः पतयः पूर्वादीनांदिशांक्रमात् ॥ ''रविः शुक्रो
महीसूनुः स्वर्भानुर्भानुजोविधुः ॥ बुधोबृहस्पतिश्चेतिदिशांचैवतथाग्रहाः ॥'' ऐरावतः पुंडरीकोवामनः कुमुदोंजनः ॥३॥ पुष्पदं
तः सार्वभौमः सुप्रतीकश्चदिग्गजाः ॥ करिण्योभ्रमुकपिलापिंगलानुपमाः क्रमात् ॥४॥ ताम्रकर्णीशुभ्रदंतीचांगनाचांजनावती ॥
क्लीबाव्ययंत्वपदिशंदिशोर्मध्येविदिक्स्त्रियाम् ॥५॥ अभ्यंतरंत्वंतरालंचक्रवालंतुमंडलं ॥ अभ्रंमेघोवारिवाहस्तनयित्नुर्बलाह
कः ॥६॥ धाराधरोजलधरस्तडित्वान्वारिदोंबुभृत् ॥ घनजीमूतमुदिरजलमुग्धूमयोनयः ॥७॥ कादंबिनीमेघमालात्रिषुमेघभवे
भ्रियम् ॥ स्तनितंगर्जितंमेघनिर्घोषेरसितादिच ॥८॥ शंपाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा ॥ तडित्सौदामनीविद्युच्चंचलाच
पलाअपि ॥९॥ स्फूर्जथुर्वज्रनिर्घोषोमेघज्योतिरिरंमदः ॥ इंद्रायुधंशक्रधनुस्तदेवऋजुरोहितम् ॥१०॥ वृष्टिर्वर्षंतद्विघातेवग्र
हावग्रहौसमौ ॥ धारासंपातआसारः शीकरोंबुकणाः स्मृताः ॥११॥ वर्षोपलस्तुकरकामेघछन्नेन्हिदुर्दिनम् ॥ अंतर्धाव्यवधापुंसि

त्वंतर्धिरपवारणं ॥ १२ ॥ अपिधानतिरोधानपिधानाच्छादनानिच ॥ हिमांशुश्चंद्रमाश्चंद्र इंदुः कुमुदबांधवः ॥ १३ ॥ विधुः सुधांशुः शु
भ्रांशुरोषधीशोनिशापतिः ॥ अब्जोजैवातृकः सोमोग्लौर्मृगांकः कलानिधिः ॥ १४ ॥ द्विजराजः शशधरोनक्षत्रेशः क्षपाकरः ॥ क
लातुषोडशोभागोबिंबोऽस्त्रीमंडलंत्रिषु ॥ १५ ॥ भित्तंशकलखंडेवापुंस्यर्धोर्धंसमेंशके ॥ चंद्रिकाकौमुदीज्योत्स्नाप्रसादस्तुप्रसन्नता
॥ १६ ॥ कलंकांकौलांछनंचचिन्हंलक्ष्मचलक्षणम् ॥ सुषमापरमाशोभाशोभाकांतिर्द्युतिश्छविः ॥ १७ ॥ अवश्यायस्तुनीहारस्तुषारस्तु
हिनंहिमम् ॥ प्रालेयंमिहिकाचाथहिमानीहिमसंहतिः ॥ १८ ॥ शीतंगुणेतद्वदर्थाः सुषीमः शिशिरोजडः ॥ तुषारः शीतलः शीतोहि
मः सप्तान्यलिंगकाः ॥ १९ ॥ ध्रुवऔत्तानपादिःस्यादगस्त्यः कुंभसंभवः ॥ मैत्रावरुणिरस्यैवलोपामुद्रासधर्मिणी ॥ २० ॥ नक्षत्रमृक्षंभं
तारातारकाप्युडुवास्त्रियां ॥ दाक्षायण्योऽश्विनीत्यादितारा अश्वयुगश्विनी ॥ २१ ॥ राधाविशाखापुष्येतुसिध्यतिष्योश्रविष्ठया ॥ समाध
निष्ठाः स्युः प्रोष्ठपदाभाद्रपदाः स्त्रियाम् ॥ २२ ॥ मृगशीर्षंमृगशिरस्तस्मिन्नेवाग्रहायणी ॥ इल्वलास्तच्छिरोदेशेतारकानिवसंतियाः
॥ २३ ॥ बृहस्पतिः सुराचार्योगीष्पतिर्धिषणोगुरुः ॥ जीवआंगिरसोवाचस्पतिश्चित्रशिखंडिजः ॥ २४ ॥ शुक्रोदैत्यगुरुः काव्यउशनाभा
र्गवः कविः ॥ अंगारकः कुजोभौमोलोहितांगोमहीसुतः ॥ २५ ॥ रौहिणेयोबुधः सौम्यः समौसौरिशनैश्चरौ ॥ तमस्तुराहुः स्वर्भानुः सैं
हिकेयोविधुंतुदः ॥ २६ ॥ सप्तर्षयोमरीच्यत्रिमुखाश्चित्रशिखंडिनः ॥ राशीनामुदयोलग्नंतेतुमेषवृषादयः ॥ २७ ॥ सूरसूर्यार्यमादित्य

द्वादशात्मदिवाकराः ॥ भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥ भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ॥ विकर्तनार्कमा
र्तंडमिहिरारुणपूषणः ॥ २९ ॥ द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ॥ विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३० ॥ भानुर्हंसः
सहस्रांशुस्तपनः सवितारविः ॥ कर्मसाक्षीजगच्चक्षुर्लोकबंधुस्त्रयीतनुः ॥ प्रद्योतनोदिनमणिः खद्योतोलोकबांधवः ॥ १ ॥ इनोभा-
गोधामनिधिश्चांशुमाल्यब्जिनीपतिः ॥ " माठरः पिंगलोदंडश्चंडांशोः पारिपार्श्वकाः ॥ ३१ ॥ सूरसूतोरुणोनूरुः काश्यपिर्गरुडाग्रजः
॥ परिवेषस्तुपरिधिरुपसूर्यकमंडले ॥ ३२ ॥ किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः ॥ भानुः करोमरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रि
याम् ॥ ३३ ॥ स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ॥ रोचिः शोचिरुभेक्लीबेप्रकाशोद्योतआतपः ॥ ३४ ॥ कोष्णंकवोष्णंमंदोष्णं
कदुष्णंत्रिषुतद्वति ॥ तिग्मंतीक्ष्णंखरंतद्वन्मृगतृष्णामरीचिका ॥ ३५ ॥ ॥ इतिदिग्वर्गः ॥ ॥ कालोदिष्टोप्यनेहापिसमयोप्यथ
पक्षतिः ॥ प्रतिपद्वेइमेस्त्रीलेतदाद्यास्तिथयोद्वयोः ॥ १ ॥ घस्रोदिनाहनीवातुक्लीबेदिवसवासरौ ॥ प्रत्यूषोहर्मुखंकल्यमुषः प्रत्युषसी
अपि ॥ २ ॥ "व्युष्टंविभातंद्वेक्लीबेपुंसिगोसर्गइष्यते" ॥ प्रभातंचदिनांतेतुसायंसंध्यापितृप्रसूः ॥ प्राह्णापराह्णमध्याह्नास्त्रिसंध्यम
थशर्वरी ॥ ३ ॥ निशानिशीथिनीरात्रिस्त्रियामाक्षणदाक्षपा ॥ विभावरीतमस्विन्यौरजनीयामिनीतमी ॥ ४ ॥ तमिस्रातामसीरात्रिर्ज्यौ
त्स्नीचंद्रिकयान्विता ॥ आगामिवर्तमानाहर्युक्तायांनिशिपक्षिणी ॥ ५ ॥ गणरात्रंनिशाबह्व्यः प्रदोषोरजनीमुखं ॥ अर्धरात्रनिशीथौ

द्वौद्वौयामप्रहरौसमौ ॥६॥ सपर्वसंधिः प्रतिपत्पंचदश्योर्यदंतरं ॥ पक्षांतौ पंचदश्यौ द्वे पौर्णमासीतुपूर्णिमा ॥७॥ कलाहीनेसानुमतिः
पूर्णेराकानिशाकरे ॥ अमावास्यात्वमावस्यादर्शः सूर्येंदुसंगमः ॥८॥ सादृष्टेंदुः सिनीवालीसानष्टेंदुकलाकुहूः ॥ उपरागोग्रहोराहुग्रस्ते
त्विंदौचपूष्णिच ॥९॥ सोपप्लवोपरक्तौद्वावग्न्युत्पातउपाहितः ॥ एकयोक्त्यापुष्पवंतौदिवाकरनिशाकरौ ॥१०॥ अष्टादशनिमेषास्तु-
काष्ठात्रिंशत्तुताः कला ॥ तास्तुत्रिंशत्क्षणस्तेतु मुहूर्तोद्वादशास्त्रियाम् ॥११॥ तेतुत्रिंशदहोरात्रः पक्षस्तेदशपंचच ॥ पक्षौपूर्वापरौशु
क्लकृष्णौमासस्तुतावुभौ ॥१२॥ द्वौद्वौमार्गादिमासौस्याहतुस्तैरयनंत्रिभिः ॥ अयनेद्वेगतिरुदग्दक्षिणार्कस्यवत्सरः ॥१३॥ समरा
त्रिंदिवेकालेविषुवद्विषुवंचतत् "पुष्ययुक्तापौर्णमासीपौषीमासेतुयत्रसा ॥ नाम्नासपौषोमाघाद्याश्चैवमेकादशापरे ॥१॥" मार्ग
शीर्षसहामार्गआग्रहायणिकश्चसः ॥१४॥ पौषेतैषसहस्यौद्वौतपामाघेथफाल्गुने ॥ स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रेचैत्रिकोम
धुः ॥१५॥ वैशाखेमाधवोराधोज्येष्ठेशुक्रः शुचिस्त्वयं ॥ आषाढेश्रावणेतुस्यान्नभाः श्रावणिकश्चसः ॥१६॥ स्युर्नभस्यप्रौष्ठपदभा
द्रभाद्रपदाः समाः ॥ स्यादाश्विनइषोप्याश्वयुजोपिस्यात्तुकार्तिके ॥१७॥ बाहुलोर्जौकार्तिकिकोहेमंतः शिशिरोस्त्रियाम् ॥ व
संतेपुष्पसमयः सुरभिर्ग्रीष्मऊष्मकः ॥१८॥ निदाघउष्णोपगमउष्णऊष्मागमस्तपः ॥ स्त्रियांप्रावृट्स्त्रियांभूम्निवर्षाअथशरत्
स्त्रियां ॥१९॥ षडमीऋतवः पुंसिमार्गादीनांयुगैः क्रमात् ॥ संवत्सरोवत्सरोब्दोहायनोस्त्रीशरत्समाः ॥२०॥ मासेनस्यादहोरात्रः पै



त्रोवर्षेणदैवतः ॥ दैवेयुगसहस्रेद्वेब्राह्मः कल्पौतुतौनृणां ॥२१॥ मन्वंतरंतुदिव्यानांयुगानामेकसप्ततिः ॥ संवर्त्तः प्रलयः कल्पः क्षयः
कल्पांतइत्यपि ॥२२॥ अस्त्रीपंकंपुमान्पाप्मापापंकिल्बिषकल्मषम् ॥ कलुषंवृजिनैनोघमंहोदुरितदुष्कृतम् ॥२३॥ स्याद्धर्ममस्त्रि-
यांपुण्यश्रेयसीसुकृतंवृषः ॥ मुत्प्रीतिः प्रमदोहर्षः प्रमोदामोदसंमदाः ॥२४॥ स्यादानंदथुरानंदः शर्मशातसुखानिच ॥ श्वः श्रेयसंशि
वंभद्रंकल्याणंमंगलंशुभं ॥२५॥ भावुकंभविकंभव्यंकुशलंक्षेममस्त्रियां ॥ शस्तंचाथत्रिषुद्रव्येपापंपुण्यंसुखादिच ॥२६॥ मतल्लिका
मचर्चिकाप्रकांडमुद्धतल्लजौ ॥ प्रशस्तवाचकान्यमून्ययः शुभावहोविधिः ॥२७॥ दैवंदिष्टंभागधेयंभाग्यंस्त्रीनियतिर्विधिः ॥ हेतुर्ना
कारणंबीजंनिदानंत्वादिकारणं ॥२८॥ क्षेत्रज्ञआत्मापुरुषः प्रधानंप्रकृतिः स्त्रियाम् ॥ विशेषः कालिकोवस्थागुणाः सत्वंरजस्तमः ॥
२९॥ जनुर्जननजन्मानिजनिरुत्पत्तिरुद्भवः ॥ प्राणीतुचेतनोजन्मीजंतुजन्युशरीरिणः ॥३०॥ जातिर्जातंचसामान्यंव्यक्तिस्तुपृथगा-
त्मता ॥ चित्तंतुचेतोहृदयंस्वांतंहृन्मानसंमनः ॥३१॥ ॥ इतिकालवर्गः ॥ ॥ बुद्धिर्मनीषाधिषणाधीः प्रज्ञाशेमुषीमतिः ॥ प्रे
क्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः ॥१॥ धीर्धारणावतीमेधासंकल्पः कर्ममानसम् ॥ "अवधानंसमाधानंप्रणिधानंतथैवच
॥" चित्ताभोगोमनस्कारश्चर्चासंख्याविचारणा ॥२॥ "विमर्शोभावनाचैववासनाचनिगद्यते ॥" अध्याहारस्तर्कऊहोविचिकि-
त्सातुसंशयः ॥ संदेहद्वापरौचाथसमौनिर्णयनिश्चयौ ॥३॥ मिथ्यादृष्टिर्नास्तिकताव्यापादोद्रोहचिंतनम् ॥ समौसिद्धांतराद्धां

नोऽभ्रांतिर्मिथ्यामतिर्भ्रमः ॥ ४ ॥ संविदागूः प्रतिज्ञानंनियमाश्रवसंश्रवाः ॥ अंगीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥ मोक्षेधी-
र्ज्ञानमन्यत्रविज्ञानंशिल्पशास्त्रयोः ॥ मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम् ॥ ६ ॥ मोक्षोपवर्गोथाज्ञानमविद्याहंमतिःस्त्रियां
॥ रूपंशब्दोगंधरसस्पर्शाश्चविषयाअमी ॥ ७ ॥ गोचराइंद्रियार्थाश्चहृषीकंविषयींद्रियं ॥ कर्मेंद्रियंतुपाय्वादिमनोनेत्रादिधींद्रियं
॥ ८ ॥ तुवरस्तुकषायोस्त्रीमधुरोलवणःकटुः ॥ तिक्तोम्लश्चरसाःपुंसितद्वत्सुषडमीत्रिषु ॥ ९ ॥ विमर्दोत्थेपरिमलोगंधेजनमनोह
रे ॥ आमोदःसोऽतिनिर्हारीवाच्यलिंगत्वमागुणात् ॥ १० ॥ समाकर्षीतुनिर्हारीसुरभिर्घ्राणतर्पणः ॥ इष्टगंधःसुगंधिःस्यादामोदी
मुखवासनः ॥ ११ ॥ पूतिगंधिस्तुदुर्गंधोविस्त्रंस्यादामगंधियत् ॥ शुक्लशुभ्रशुचिश्वेतविशदश्येतपांडराः ॥ १२ ॥ अवदातःसितोगौरोव
लक्षोधवलोर्जुनः ॥ हरिणःपांडुरःपांडुरीषत्पांडुस्तुधूसरः ॥ १३ ॥ कृष्णोनीलासितश्यामकालश्यामलमेचकाः ॥ पीतोगौरोहरि-
द्राभःपालाशोहरितोहरित् ॥ १४ ॥ लोहितोरोहितोरक्तःशोणःकोकनदच्छविः ॥ अव्यक्तरागस्त्वरुणःश्वेतरक्तस्तुपाटलः ॥ १५ ॥-
श्यावःस्यात्कपिशोधूम्रधूमलौकृष्णलोहिते ॥ कडारःकपिलःपिंगपिशंगौकद्रुपिंगलौ ॥ १६ ॥ चित्रंकिर्मीरकल्माषशबलैताश्चक
र्बुरे ॥ गुणेशुक्लादयःपुंसिगुणिलिंगास्तुतद्वति ॥ १७ ॥ ॥ इतिधीवर्गः ॥ ॥ ब्राह्मीतुभारतीभाषागीर्वाग्वाणीसरस्वती ॥
॥ व्याहारउक्तिर्लपितंभाषितंवचनंवचः ॥ १ ॥ अपभ्रंशोपशब्दःस्याच्छास्त्रेशब्दस्तुवाचकः ॥ तिङ्सुबंतचयोवाक्यंक्रियावाकार



कान्विता ॥ २ ॥ श्रुतिःस्त्रीवेदआम्नायस्त्रयीधर्मस्तुतद्विधिः ॥ स्त्रियामृक्सामयजुषीइतिवेदास्त्रयस्त्रयी ॥ ३ ॥ शिक्षेत्यादिश्रुते
रंगमोंकारप्रणवौसमौ ॥ इतिहासःपुरावृत्तमुदात्ताद्यास्त्रयःस्वराः ॥ ४ ॥ आन्वीक्षिकीदंडनीतिस्तर्कविद्यार्थशास्त्रयोः ॥ आख्यायि
कोपलब्धार्थापुराणंपंचलक्षणम् ॥ ५ ॥ प्रबंधकल्पनाकथाप्रवल्हिकाप्रहेलिका ॥ स्मृतिस्तुधर्मसंहितासमाहृतिस्तुसंग्रहः ॥ ६ ॥ सम-
स्यातुसमासार्थाकिंवदंतीजनश्रुतिः ॥ वार्ताप्रवृत्तिर्वृत्तांतउदंतस्यादथाह्वयः ॥ ७ ॥ आख्याह्वेअभिधानंचनामधेयंचनामच ॥ हूति
राकारणाह्वानंसंहूतिर्बहुभिःकृता ॥ ८ ॥ विवादोव्यवहारःस्यादुपन्यासस्तुवाङ्मुखं ॥ उपोद्घातउदाहारःशपनंशपथःपुमान् ॥ ९ ॥
प्रश्नोनुयोगःपृच्छाचप्रतिवाक्योत्तरेसमे ॥ मिथ्याभियोगोभ्याख्यानमथमिथ्याभिशंसनम् ॥ १० ॥ अभिशापःप्रणादस्तुशब्दःस्याद
नुरागजः ॥ यशःकीर्तिःसमज्ञाचस्तवःस्तोत्रंस्तुतिर्नुतिः ॥ ११ ॥ आम्रेडितंद्विस्त्रिरुक्तमुच्चैर्घुष्टंतुघोषणा ॥ काकुःस्त्रियांविकारोयः
शोकभीत्यादिभिर्ध्वनेः ॥ १२ ॥ अवर्णाक्षेपनिर्वादपरीवादापवादवत् ॥ उपक्रोशोजुगुप्साचकुत्सानिंदाचगर्हणे ॥ पारुष्यमतिवा
दःस्याद्भर्त्सनंत्वपकारगीः ॥ यःसनिंदउपालंभस्तत्रस्यात्परिभाषणम् ॥ १४ ॥ तत्रत्वाक्षारणायःस्यादाक्रोशोमैथुनंप्रति ॥ स्यादा-
भाषणमालापःप्रलापोऽनर्थकंवचः ॥ १५ ॥ अनुलापोमुहुर्भाषाविलापःपरिदेवनम् ॥ विप्रलापोविरोधोक्तिःसंलापोभाषणंमिथः ॥
१६ ॥ सुप्रलापःसुवचनमपलापस्तुनिन्हवः ॥ " चोद्यमाक्षेपाभियोगौशापाक्रोशौदुरेषणा ॥ अस्त्रीचाटुचटुश्लाघाप्रेम्णामिथ्या-

विकत्थनं ॥ १ ॥ ” संदेशवाग्वाचिकंस्याद्वाग्भेदास्तुत्रिषूत्तरे ॥ १७ ॥ रुशतीवागकल्याणी स्यात्कल्यातुशुभात्मिका ॥ अत्यर्थमधु रंसांत्वंसंगतंहृदयंगमम् ॥ १८ ॥ निष्ठुरंपरुषंग्राम्यमश्लीलंसूनृतंप्रिये ॥ सत्येथसंकुलक्लिष्टेपरस्परपराहते ॥ १९ ॥ लुप्तवर्णपदंग्र स्तंनिरस्तंत्वरितोदितं ॥ अंबूकृतंसनिष्ठीवमबद्धंस्यादनर्थकं ॥ २० ॥ अनक्षरमवाच्यंस्यादाहतंतुमृषार्थकं ॥ “ सोल्लुंठनंतु सोत्प्रा संभणितंरतिकूजितं ॥ श्राव्यंहृद्यंमनोहारिविस्पष्टंप्रकटोदितं ॥ १ ॥ ” अथम्लिष्टमविस्पष्टंवितथंत्वनृतंवचः ॥ २१ ॥ सत्यंतथ्यमृतं सम्यगमूनित्रिषुतद्वति ॥ शब्देनिनादनिनदध्वनिध्वानरवस्वनाः ॥ २२ ॥ स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ॥ आरवारावसं- रावविरावाअथमर्मरः ॥ २३ ॥ स्वनितेवस्त्रपर्णानांभूषणानांतुशिंजितं ॥ निक्वाणोनिक्वणःक्वाणःक्वणःक्वणनमित्यपि ॥ वीणायाःक्व णिते:प्रादेःप्रक्वाणप्रक्वणादयः ॥ कोलाहलःकलकलस्तिरश्चांवाशितंरुतं ॥ २५ ॥ स्त्रीप्रतिश्रुत्प्रतिध्वानेगीतंगानमिमेसमे ॥ इ तिशब्दादिवर्गः ॥ ॥ निषादर्षभगांधारषड्जमध्यमधैवताः ॥ पंचमश्चेत्यमीसप्ततंत्रीकंठोत्थिताःस्वराः ॥ १ ॥ काकलीतुकले सूक्ष्मेध्वनौतुमधुरास्फुटे ॥ कलोमंद्रस्तुगंभीरेतारोत्युच्चैस्त्रयःस्त्रिषु ॥ २ ॥ “ नृणामुरसिमध्यस्थोद्वाविंशतिविधोध्वनिः ॥ समंद्रः कंठमध्यस्थस्तारःशिरसिगीयते ॥ १ ॥ ” समन्वितलयस्त्वेकतालोवीणातुवल्लकी ॥ विपंचीसातुतंत्रीभिःसप्तभिःपरिवादिनी ॥ ३ ॥ त तंवीणादिकंवाद्यमानद्धंमुरजादिकं ॥ वंशादिकंतुसुषिरंकांस्यतालादिकंघनं ॥ ४ ॥ चतुर्विधमिदंवाद्यंवादित्रातोद्यनामकं ॥ मृदंगा



मुरजाभेदास्त्वंक्यालिंग्योर्ध्वकास्त्रयः ॥ ५ ॥ स्याद्यशःपटहोढक्काभेरीस्त्रीदुंदुभिःपुमान् ॥ आनकःपटहोस्त्रीस्यात्कोणोवीणादि वादनं ॥ ६ ॥ वीणादंडःप्रवालःस्यात्ककुभस्तुप्रसेवकः ॥ कोलंबकस्तुकायोस्याउपनाहोनिबंधनं ॥ ७ ॥ वाद्यप्रभेदाडमरुमड्डुडिंडि मझर्झराः ॥ मर्दलःपणवोन्येचनर्तकीलासिकेसमे ॥ ८ ॥ विलंबितंद्रुतंमध्यंतत्वमोघोघनंक्रमात् ॥ तालःक्रियामानंलयःसाम्यमथा स्त्रियाम् ॥ ९ ॥ तांडवंनटनंनाट्यंलास्यंनृत्यंचनर्तने ॥ तौर्यत्रिकंनृत्यगीतवाद्यंनाट्यमिदंत्रयम् ॥ १० ॥ भ्रकुंसश्चभ्रुकुंसश्चभ्रूकुंस श्चेतिनर्तकः ॥ स्त्रीवेषधारीपुरुषोनाट्योक्तौगणिकाज्जुका ॥ ११ ॥ भगिनीपतिरावुत्तोभावोविद्वानथावुकः ॥ जनकोयुवराजस्तुकु मारोभर्तृदारकः ॥ १२ ॥ राजाभट्टारकोदेवस्तत्सुताभर्तृदारिका ॥ देवीकृताभिषेकायामितरासुतुभट्टिनी ॥ १३ ॥ अब्रह्मण्यमव- ध्योक्तौराजश्यालस्तुराष्ट्रियः ॥ अंबामाताथबालास्याद्वासूरार्यस्तुमारिषः ॥ १४ ॥ अत्तिकाभगिनीज्येष्ठानिष्ठानिर्वहणेसमे ॥ हं डेहंजेहलाह्वानेनीचांचेटींसखींप्रति ॥ १५ ॥ अंगहारोंगविक्षेपोव्यंजकाभिनयौसमौ ॥ निर्वृत्तेत्वंगसत्वाभ्यांद्वेत्रिष्वांगिकसा- त्विके ॥ १६ ॥ शृंगारवीरकरुणाद्भुतहास्यभयानकाः ॥ बीभत्सरौद्रौचरसाःशृंगारःशुचिरुज्वलः ॥ १७ ॥ उत्साहवर्धनोवीरःकारु ण्यंकरुणाघृणा ॥ कृपादयानुकंपास्यादनुक्रोशोप्यथोहसः ॥ १८ ॥ हासोहास्यंचबीभत्संविकृतंत्रिष्विदंद्वयं ॥ विस्मयोद्भुतमा श्चर्यंचित्रमप्यथभैरवम् ॥ १९ ॥ दारुणंभीषणंभीष्मंघोरंभीमंभयानकं ॥ भयंकरंप्रतिभयंरौद्रंतूग्रममीत्रिषु ॥ २० ॥ चतुर्दश

दरस्त्रासोभीतिर्भीः साध्वसंभयं॥ विकारोमानसोभावोऽनुभावोभावबोधकः॥२१॥ गर्वोऽभिमानोऽहंकारोमानश्चित्तसमुन्नतिः
॥"दर्पोवलेपोवष्टंभश्चित्तोद्रेकः स्मयोमदः" अनादरः परिभवः परीभावस्तिरस्क्रिया॥२२॥ रीढावमाननावज्ञावहेलनमसूर्क्षणं
॥ मंदाक्षंह्रीस्त्रपाव्रीडालज्जासापत्रपान्यतः॥२३॥ क्षांतिस्तितिक्षाभिध्यातुपरस्यविषयेस्पृहा॥ अक्षांतिरीर्ष्यासूयातुदोषारो
पोगुणेष्वपि॥२४॥ वैरंविरोधोविद्वेषोमन्युशोकौतुशुक्स्त्रियाम्॥ पश्चात्तापोनुतापश्चविप्रतीसारइत्यपि॥२५॥ कोपक्रोधामर्षरो
षप्रतिघारुट्क्रुधौस्त्रियौ॥शुचौतुचरितेशीलमुन्मादश्चित्तविभ्रमः॥२६॥ प्रेमानाप्रियताहार्दंप्रेमस्नेहोथदोहदं॥ इच्छाकांक्षास्पृहे
हातृड्वांछालिप्सामनोरथः॥२७॥ कामोभिलाषस्तर्षश्चसोत्यर्थंलालसाद्वयोः॥ उपाधिर्नाधर्मचिंतापुंस्याधिर्मानसीव्यथा॥२८॥ स्या
च्चिंतास्मृतिराध्यानमुत्कंठोत्कलिकेसमे॥ उत्साहोऽध्यवसायः स्यात्सवीर्यमतिशक्तिभाक्॥२९॥ कपटोस्त्रीव्याजदंभोपधयश्छद्म
कैतवे॥ कुसृतिर्निकृतिः शाठ्यंप्रमादोनवधानता॥३०॥ कौतूहलंकौतुकंचकुतुकंचकुतूहलं॥ स्त्रीणांविलासबिब्बोकविभ्रमाललितं
तथा॥३१॥ हेलालीलेत्यमीहावाः क्रियाः शृंगारभावजाः॥ द्रवकेलिपरीहासाः क्रीडालीलाचनर्मच॥३२॥ व्याजोपदेशोलक्ष्यंचक्रीडा
खेलाचकूर्दनम्॥ घर्मोनिदाघः स्वेदः स्यात्प्रलयोनष्टचेष्टता॥३३॥ अवहित्थाकारगुप्तिः समौसंवेगसंभ्रमौ॥ स्यादाच्छुरितकंहासः
सोत्प्रासः समनाक्स्मितम्॥३४॥ मध्यमः स्याद्विहसितंरोमांचोरोमहर्षणं॥ क्रंदितंरुदितंक्रुष्टंजृंभस्तुत्रिषुजृंभणं॥३५॥ विप्रलं



भोविसंवादोरिंगणंस्खलनंसमे॥ स्यान्निद्राशयनंस्वापः स्वप्नः संवेशइत्यपि॥३६॥ तंद्रीप्रमीलाभ्रुकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियां
॥ अदृष्टिः स्यादसौम्येक्षिणिसंसिद्धिप्रकृतीत्विमे॥३७॥ स्वरूपंचस्वभावश्चनिसर्गश्चाथवेपथुः॥ कंपोथक्षणउद्धर्षोमहउद्धवउत्सवः॥
३८॥ ॥इतिनाट्यवर्गः॥ ॥अधोभुवनपातालंबलिसद्मरसातलं॥ नागलोकोथकुहरंसुषिरंविवरंबिलं॥१॥ छिद्रंनिर्व्यथनं
रोकंरंध्रंश्वभ्रंवपासुषिः॥ गर्तावटौभुविश्वभ्रेसरंध्रेसुषिरंत्रिषु॥२॥ अंधकारोऽस्त्रियांध्वांतंतमिस्रंतिमिरंतमः॥ ध्वांतेगाढेंधतमसं
क्षीणेवतमसंतमः॥३॥ विष्वक्संतमसंनागाः काद्रवेयास्तदीश्वरः॥ शेषोनंतोवासुकिस्तुसर्पराजोथगोनसे॥४॥ तिलित्सः स्यादज
गरेशयुर्वाहसइत्युभौ॥ अलगर्दोजलव्यालः समौराजिलडुंडुभौ॥५॥ मालुधानोमातुलाहिर्निर्मुक्तोमुक्तकंचुकः॥ सर्पः पृदाकुर्भुजगो
भुजंगोहिर्भुजंगमः॥६॥ आशीविषोविषधरश्चक्रीव्यालः सरीसृपः॥ कुंडलीगूढपाच्चक्षुःश्रवाः काकोदरः फणी॥७॥ दर्वीकरोदीर्घपृ
ष्ठोदंदशूकोबिलेशयः॥ उरगः पन्नगोभोगीजिह्मगः पवनाशनः॥८॥ "लेलिहानोद्विरसनोगोकर्णः कंचुकीतथा॥ कुंभीनसः फण
धरोहरिर्भोगधरस्तथा॥१॥ अहेः शरीरंभोगः स्यादाशीरप्यहिदंष्ट्रिका॥" त्रिष्वाहेयंविषास्थ्यादि[illegible]फटायांतुफणाद्वयोः॥ समौकंचुक
निर्मोकौक्ष्वेडस्तुगरलंविषं॥९॥ पुंसिक्लीबेचकाकोलकालकूटहलाहलाः॥ सौराष्ट्रिकः शौल्किकेयोब्रह्मपुत्रः प्रदीपनः॥१०॥ दारदोव
त्सनाभश्चविषभेदाअमीनव॥ विषवैद्योजांगुलिकोव्यालग्राह्यहितुंडिकः॥११॥ ॥इतिपातालभोगिवर्गः॥ ॥स्यान्नारकस्तु

नरकोनिरयोदुर्गतिः स्त्रियां॥ तद्भेदास्तपनावीचिमहारौरवरौरवाः॥ १॥ संघातः कालसूत्रंचेत्याद्याः सत्वास्तुनारकाः॥ प्रेतावैतरणी
सिंधुः स्यादलक्ष्मीस्तुनिर्ऋतिः॥२॥ विष्टिराजूः कारणातुयातनातीव्रवेदना॥ पीडाबाधाव्यथादुःखमामनस्यंप्रसूतिजं॥३॥ स्यात्कष्टंकृ
च्छ्रमाभीलंत्रिष्वेषांभेद्यगामियत्॥ ॥इतिनरकवर्गः॥ ॥ समुद्रोब्धिरकूपारः पारावारः सरित्पतिः॥ उदन्वानुदधिः सिंधुः सर
स्वान्सागरोऽर्णवः॥१॥ रत्नाकरोजलनिधिर्यादः पतिरपांपतिः॥ तस्यप्रभेदाः क्षीरोदोलवणोदस्तथापरे॥२॥ आपः स्त्रीभूम्निवार्वा
रिसलिलंकमलंजलं॥ पयः कीलालममृतंजीवनंभुवनंवनं॥३॥ कबंधमुदकंपाथः पुष्करंसर्वतोमुखं॥ अंभोर्णस्तोयपानीयनीरक्षी
रांबुशंबरं॥४॥ मेघपुष्पंघनरसस्त्रिषुद्वेआप्यमम्मयं॥ भंगस्तरंगऊर्मिर्वास्त्रियांवीचिरथोर्मिषु॥५॥ महत्सूल्लोलकल्लोलौस्यादाव
र्तोंभसांभ्रमः॥ पृषंतिबिंदुपृषताः पुमांसोविप्रुषः स्त्रियां॥६॥ चक्राणिपुटभेदाः स्युर्भ्रमाश्चजलनिर्गमाः॥ कूलंरोधश्चतीरंचप्रतीरंच
तटंत्रिषु॥७॥ पारावारेपरार्वाचीतीरेपात्रंतदंतरं॥ द्वीपोस्त्रियामंतरीपंयदंतर्वारिणस्तटं॥८॥ तोयोत्थितंतत्पुलिनंसैकतंसिकताम
यं॥ निषद्वरस्तुजंबालः पंकोस्त्रीशादकर्दमौ॥९॥ जलोच्छ्वासाः परीवाहाः कूपकास्तुविदारकाः॥ नाव्यंत्रिलिंगंनौतार्येस्त्रियांनौस्तर
णिस्तरिः॥१०॥ उडुपंतुप्लवः कोलः स्रोतोंबुसरणंस्वतः॥ आतरस्तरपण्यंस्याद्द्रोणीकाष्ठांबुवाहिनी॥११॥ सांयात्रिकः पोतवणि-
क्कर्णधारस्तुनाविकः॥ नियामकाः पोतवाहाः कूपकोगुणवृक्षकः॥१२॥ नौकादंडः क्षेपणीस्यादरित्रंकेनिपातकः॥ अभ्रिः स्त्रीका-



ष्ठकुद्दालः सेकपात्रंतुसेचनं॥१३॥ क्लीबेर्द्धनावन्नावोर्द्धेतीतनौकेतिनुत्रिषु॥ त्रिष्वागाधात्प्रसंनोच्छः कलुषोनच्छआविलः॥१४॥ नि
म्नंगभीरंगंभीरमुत्तानंतद्विपर्यये॥ अगाधमतलस्पर्शेकैवर्तेदाशधीवरौ॥१५॥ आनायः पुंसिजालंस्याच्छणसूत्रंपवित्रकं॥ मत्स्या
धानीकुवेणीस्याद्बडिशंमत्स्यवेधनं॥१६॥ पृथुरोमाझषोमत्स्योमीनोवैसारिणोंडजः॥ विसारः शकुलीचाथगडकः शकुलार्भकः
॥१७॥ सहस्रदंष्ट्रः पाठीनउलूपीशिशुकः समौ॥ नलमीनश्चिलिचिमः प्रोष्ठीतुशफरीद्वयोः॥१८॥ क्षुद्रांडमत्स्यसंघातः पोताधानम
थोझषाः॥ रोहितोमद्गुरः शालोराजीवः शकुलस्तिमिः॥१९॥ तिमिंगिलादयश्चाथयादांसिजलजंतवः॥ तद्भेदाः शिशुमारोद्रशंक-
वोमकरादयः॥२०॥ स्यात्कुलीरः कर्कटकः कूर्मेकमठकच्छपौ॥ ग्राहोवहारोनक्रस्तुकुंभीरोथमहीलता॥२१॥ गंडूपदः किंचुलको
निहाकागोधिकासमे॥ रक्तपातुजलौकायांस्त्रियांभूम्निजलौकसः॥२२॥ मुक्तास्फोटः स्त्रियांशुक्तिः शंखस्यात्कंबुरस्त्रियौ॥ क्षु
द्रशंखाः शंखनखाः शंबूकाजलशुक्तयः॥२३॥ भेकेमंडूकवर्षाभूःशालूरप्लवदर्दुराः॥ शिलीगंडूपदीभेकीवर्षाभ्वीकमठीडुलिः॥
॥मद्गुरस्यप्रियाशृंगीदुर्नामादीर्घकोशिका॥ जलाशयाजलाधारास्तत्रागाधजलोह्रदः॥२५॥ आहावस्तुनिपानंस्यादुपकूपज
लाशये॥ पुंस्येवांधुः प्रहिः कूपउदपानंतुपुंसिवा॥२६॥ नेमिस्त्रिकास्यवीनाहोमुखबंधनमस्ययत्॥ पुष्करिण्यांतुखातंस्यादखा
तंदेवखातकं॥२७॥ पद्माकरस्तडागोस्त्रीकासारः सरसीसरः॥ वेशंतः पल्वलंचाल्पसरोवापीतुदीर्घिका॥२८॥ खेयंतुपरिखाधा

रस्त्वंभसांयत्रधारणं ॥ स्यादालवालमावालमावापोथनदीसरित् ॥२९॥ तरंगिणीशैवलिनीतटिनीह्रादिनीधुनी ॥ स्रोतस्वतीद्वी
पवतीस्रवंतीनिम्नगाऽपगा ॥३०॥ " कूलंकषानिर्झरिणीरोधोवक्रासरस्वती ॥" गंगाविष्णुपदीजन्हुतनयासुरनिम्नगा ॥ भा
गीरथीत्रिपथगात्रिस्रोताभीष्मसूरपि ॥ कालिंदीसूर्यतनयायमुनाशमनस्वसा ॥ रेवातुनर्मदासोमोद्भवामेकलकन्यका ॥३२॥-
करतोयासदानीराबाहुदासैतवाहिनी ॥ शतद्रुस्तुशुतुद्रिः स्याद्विपाशातुविपाट्स्त्रियां ॥३३॥ शोणोहिरण्यवाहः स्यात्कुल्याल्पाकृ
त्रिमासरित् ॥ शरावतीवेत्रवतीचंद्रभागासरस्वती ॥ ३४॥ कावेरीसरितोन्याश्चसंभेदः सिंधुसंगमः ॥ द्वयोः प्रणालीपयसःपद
व्यांत्रिषुतूत्तरौ ॥ ३५॥ देविकायांसरय्वांचभवेदाविकसारवौ ॥ सौगंधिकंतुकल्हारंहल्लकंरक्तसंध्यकं ॥ ३६॥ स्यादुत्पलंकुवलयमथ
नीलांबुजन्मच ॥ इंदीवरंचनीलेस्मिन्सितेकुमुदकैरवे ॥ ३७॥ शालूकमेषांकंदः स्याद्वारिपर्णीतुकुंभिका ॥ जलनीलीतुशैवालंशैवलो
थकुमुद्वती ॥ ३८ ॥ कुमुदिन्यांनलिन्यांतुबिसिनीपद्मिनीमुखाः ॥ वापुंसिपद्मंनलिनमरविंदंमहोत्पलं ॥ ३९ ॥ स-
हस्रपत्रंकमलंशतपत्रंकुशेशयम् ॥ पंकेरुहंतामरसंसारसंसरसीरुहम् ॥ ४० ॥ बिसप्रसूनराजीवपुष्करांभोरुहा-
णिच ॥ पुंडरीकंसितांभोजमथरक्तसरोरुहे ॥ ४१ ॥ रक्तोत्पलंकोकनदंनालोनालमथास्त्रियाम् ॥ मृणालंबिसमब्जा
दिकदंबेखंडमस्त्रियाम् ॥ ४२ ॥ करहाटः शिफाकंदः किंजल्कः केसरोस्त्रियाम् ॥ संवर्तिकानवदलंबीजकोशोवराट







कः ॥ ४३ ॥ ॥ इतिवारिवर्गः ॥ ॥ उक्तंस्वर्व्योमदिक्कालधीशब्दादिसनाट्यकम् ॥ पातालभोगिनरकंवारिचैषां
चसंगतम् ॥ १॥ इत्यमरसिंहकृतौनामलिंगानुशासने ॥ स्वरादिकांडः प्रथमः सांगएवसमर्थितः ॥२॥ इत्यमरकोशेप्रथ
मकांडंसमाप्तम् ॥ १॥ ॥ श्रीमज्जगदीश्वरार्पणमस्तु ॥ ॥ शुभंभवतु ॥ ॥ श्रीरस्तु ॥
॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥

श्रीगणेशायनमः॥ ॥वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः॥ नृब्रह्मक्षत्रविट्‌शूद्रैः सांगोपांगैरिहोदिताः॥१॥ भूर्भूमिर
चलानंतारसाविश्वंभरास्थिरा॥धराधरित्रीधरणीक्षोणिर्ज्याकाश्यपीक्षितिः॥२॥सर्वंसहावसुमतीवसुधोर्वीवसुंधरा॥गोत्राकुःपृ
थिवीपृथ्वीक्ष्माऽवनिर्मेदिनीमही॥३॥विपुलागह्वरीधात्रीगौरिलाकुंभिनीक्षमा॥ भूतधात्रीरत्नगर्भाजगतीसागरांबरा॥४॥मृन्मृ
त्तिकाप्रशस्तातुमृत्सामृत्स्नाचमृत्तिका॥उर्वरासर्वसस्याढ्यास्यादूषःक्षारमृत्तिका॥४॥ऊषवानूषरोद्वावप्यन्यलिंगौस्थलंस्थली॥
समानौमरुधन्वानौद्वेखिलाप्रहतेसमे॥५॥त्रिष्वथोजगतीलोकोविष्टपंभुवनंजगत्॥लोकोयंभारतंवर्षंशरावत्यास्तुयोवधेः॥६॥
देशःप्राग्दक्षिणःप्राच्यउदीच्यःपश्चिमोत्तरः॥प्रत्यंतोम्लेच्छदेशःस्यान्मध्यदेशस्तुमध्यमः॥७॥आर्यावर्तःपुण्यभूमिर्मध्यंविंध्यहि
मौ[illegible]योः॥नीवृज्जनपदोदेशविषयौतूपवर्तनं॥८॥त्रिष्वागोष्ठान्नडप्रायेनड्वान्नड्वलइत्यपि॥कुमुद्वान्कुमुदप्रायेवेतस्वान्बहुवेतसे
॥९॥शाद्वलःशादहरितेसजंबालेतुपंकिलः॥जलप्रायमनूपंस्यात्पुंसिकच्छस्तथाविधः॥१०॥स्त्रीशर्कराशर्करिलःशार्करःश
र्करावति॥ देशएवादिमावेवमुन्नेयाःसिकतावति॥११॥देशोनद्यंबुवृष्ट्यंबुसंपन्नव्रीहिपालितः॥स्यान्नदीमातृकोदेवमातृकश्च
यथाक्रमं॥१२॥ सुराज्ञिदेशेराजन्वान्स्यात्ततोन्यत्रराजवान्॥गोष्ठंगोस्थानकंतत्तुगौष्ठीनंभूतपूर्वकम्॥१३॥ पर्यंतभूःपरिसरः
सेतुरालौस्त्रियांपुमान्॥वामलूरश्चनाकुश्चवल्मीकंपुंनपुंसकं॥१४॥ अयनंवर्त्ममार्गाध्वपंथानःपदवीसृतिः॥ सरणिःपद्धतिः





पद्यावर्तन्येकपदीतिच॥१५॥ अतिपंथाःसुपंथाश्चसत्पथश्चार्चितेध्वनि॥व्यध्वोदुरध्वोविपथःकदध्वाकापथःसमाः॥१६॥अपं
थास्त्वपथंतुल्येशृंगाटकचतुष्पथे॥ प्रांतरंदूरशून्योध्वाकांतारंवर्त्मदुर्गमं॥१७॥ गव्यूतिःस्त्रीक्रोशयुगंनल्वःकिष्कुचतुःशतं॥
घंटापथःसंसरणंतत्पुरस्योपनिष्करं॥१८॥ द्यावापृथिव्यौरोदस्यौद्यावाभूमीचरोदसी॥दिवस्पृथिव्यौगंजातुरुमास्याल्लवणाकरः
॥१९॥ ॥इतिभूमिवर्गः॥ ॥पूःस्त्रीपुरीनगर्यौवापत्तनंपुटभेदनं॥स्थानीयंनिगमोन्यत्तुयन्मूलनगरात्पुरं॥१॥ तच्छाखान
गरंवेशोवेश्याजनसमाश्रयः॥आपणस्तुनिषद्यायांविपणिःपण्यवीथिका॥२॥ रथ्याप्रतोलीविशिखास्याच्चयोवप्रमस्त्रियां॥प्रा
कारोवरणःसालःप्राचीनंप्रांततोवृतिः॥३॥ भित्तिःस्त्रीकुड्यमेडूकंयदंतर्न्यस्तकीकसं॥ गृहंगेहोदवसितंवेश्मसद्मनिकेतनं॥
४॥ निशांतपस्त्यसदनभवनागारमंदिरं॥ गृहाःपुंसिचभूम्न्येवनिकाय्यनिलयालयाः॥५॥वासःकुटीद्वयोःशालासभासंजवनं
त्विदं॥ चतुःशालंमुनीनांतुपर्णशालोटजोस्त्रियां॥६॥ चैत्यमायतनंतुल्येवाजिशालातुमंदुरा॥आवेशनंशिल्पिशालाप्रपा-
पानीयशालिका॥७॥ मठश्छात्रादिनिलयोगंजातुमदिरागृहं॥ गर्भागारंवासगृहमरिष्टंसूतिकागृहं॥८॥"कुट्टिमोस्त्रीनिब
द्धाभूश्चंद्रशालाशिरोगृहं॥" वातायनंगवाक्षोथमंडपोऽस्त्रीजनाश्रयः॥ हर्म्यादिर्धनिनांवासःप्रासादोदेवभूभुजां॥९॥ सौधोऽ
स्त्रीराजसदनमुपकार्योपकारिका॥ स्वस्तिकःसर्वतोभद्रोनंद्यावर्तादयोपिच॥१०॥विच्छंदकःप्रभेदाहिभवंतीश्वरसद्मनां॥

स्त्र्यगारं भूभुजामंतः पुरं स्यादवरोधनं ॥ ११ ॥ शुद्धांतश्चावरोधश्च स्यादट्टः क्षौममस्त्रियां ॥ प्रघाण प्रघणालिंदा बहिर्द्वारप्रकोष्ठ
के ॥ १२ ॥ गृहावग्रहणी देहल्यंगणं चत्वराजिरे ॥ अधस्ताद्दारुणि शिला नासा दारूपरि स्थितं ॥ १३ ॥ प्रच्छन्नमंतर्द्वारं स्यात्पक्षद्वारं तु
पक्षकं ॥ वलीकनीध्रे पटलप्रांते थ पटलं छदिः ॥ १४ ॥ गोपानसी तु वलभीच्छादने वक्रदारुणि ॥ कपोतपालिकायां तु विटंकं पुन्नपुं
सकं ॥ १५ ॥ स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका ॥ तोरणोस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरं ॥ १६ ॥ कूटं पूर्द्वारि यद्धस्तिनखस्त
स्मिन्नथ त्रिषु ॥ कपाटमररं तुल्ये तद्विष्कंभोर्गलं न ना ॥ १७ ॥ आरोहणं स्यात्सोपानं निश्रेणिस्त्वधिरोहणी ॥ संमार्जनी शोधनी
स्यात्संकरो वकरस्तथा ॥ १८ ॥ क्षिप्ते मुखं निःसरणं सन्निवेशो निकर्षणं ॥ समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियां ॥ १९ ॥ ग्रामां
तमुपशल्यं स्यात्सीमसीमे स्त्रियामुभे ॥ घोष आभीरपल्ली स्यात्पक्कणः शबरालयः ॥ २० ॥ ॥ इति पुरवर्गः ॥ ॥ महीध्रे शि
खरिक्ष्माभृदहार्यधरपर्वताः ॥ अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥ लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत्समौ ॥ अ
स्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः ॥ २ ॥ हिमवान्निषधो विंध्यो माल्यवान्पारियात्रिकः ॥ गंधमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥
पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ॥ कूटोस्त्री शिखरं शृंगं प्रपातस्त्वतटो भृगुः ॥ ४ ॥ कटकोऽस्त्री नितंबो द्रेः स्नुः प्रस्थः सानुर
स्त्रियौ ॥ उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ॥ ५ ॥ दरी तु कंदरो वा स्त्री देवखातबिले गुहा ॥ गह्वरं गंडशैलास्तु च्युताः स्थूलोप

प्र

दो १२

पलागिरेः ॥ ६ ॥ "दंतकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः ॥" खनिः स्त्रियामाकरः स्यात्पादाः प्रत्यंतपर्वताः ॥ उपत्यकाद्रेरा
सन्ना भूमिरूर्ध्वमधित्यका ॥ ७ ॥ धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः ॥ निकुंजकुंजौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥ ॥
इति शैलवर्गः ॥ ॥ अटव्यरण्यं विपिनं गहनं काननं वनं ॥ महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ॥ १ ॥ आरामः स्यादुपवनं
कृत्रिमं वनमेव यत् ॥ अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥ पुमानाक्रीड उद्यानं राज्ञः साधारणं वनं ॥ स्यादेतदेव प्रमदवन
मंतःपुरोचितं ॥ ३ ॥ वीथ्यालिरावलिः पंक्तिः श्रेणी लेखास्तु राजयः ॥ वन्या वनसमूहे स्यादंकुरोभिनवोद्भिदि ॥ ४ ॥ वृक्षो महीरु
हः शाखी विटपी पादपस्तरुः ॥ अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ॥ ५ ॥ वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः ॥ -
ओषध्यः फलपाकांताः स्युरवंध्यः फलेग्रहिः ॥ ६ ॥ वंध्योफलो वकेशी च फलवान्फलिनः फली ॥ प्रफुल्लोत्फुल्लसंफुल्लव्याकोशवि
कचस्फुटाः ॥ ७ ॥ फुल्लश्चैते विकसिते स्युरवंध्यादयस्त्रिषु ॥ स्थाणुर्वा ना ध्रुवः शंकुर्ह्रस्वशाखाशिफः क्षुपः ॥ ८ ॥ अप्रकांडे स्तंबगु
ल्मौ वल्ली तु व्रततिर्लता ॥ लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि ॥ ९ ॥ नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ॥ अस्त्री प्र
कांडः स्कंधः स्यान्मूलाच्छाखावधिस्तरोः ॥ १० ॥ समे शाखालते स्कंधशाखाशाले शिफाजटे ॥ शाखाशिफावरोहः स्यान्मू
लाच्चाग्रं गता लता ॥ ११ ॥ शिरोग्रं शिखरं वा ना मूलं बुध्नोंघ्रिनामकः ॥ सारो मज्जा नरि त्वक्स्त्री वल्कं वल्कलमस्त्रियां ॥ १२ ॥ का

अ॰को॰ १५

का॰ २

ष्टंदार्विंधनंत्वेधइध्ममेधः समित्स्त्रियाम् ॥ निष्कुहः कोटरं वानावल्लरिर्मंजरिस्त्रियौ ॥१३॥ पत्रंपलाशंछदनंदलंपर्णंछदःपु
मान् ॥ पल्लवोस्त्री किसलयंविस्तारोविटपोस्त्रियां ॥१४॥ वृक्षादीनांफलंसस्यंवृंतंप्रसवबंधनं ॥ आमेफलेशलाटुःस्याच्छुष्के
वानमुभेत्रिषु ॥१५॥ क्षारकोजालकंक्लीबेकलिकाकोरकःपुमान् ॥ स्याद्गुच्छकस्तुस्तबकः कुड्मलोमुकुलोस्त्रियां ॥१६॥ स्त्रियः
सुमनसःपुष्पंप्रसूनंकुसुमंसुमं ॥ मकरंदःपुष्परसःपरागःसुमनोरजः ॥१७॥ द्विहीनंप्रसवेसर्वंहरीतक्यादयःस्त्रियां ॥ आश्वत्थ
वैणवप्लाक्षनैयग्रोधैंगुदंफले ॥१८॥ बार्हतंचफलेजंब्वाजंबूःस्त्रीजंबुजांबवं ॥ पुष्पेजातीप्रभृतयःस्वलिंगाव्रीहयःफले ॥१९॥ वि
दार्याद्यास्तुमूलेपिपुष्पेक्लीबेपिपाटला ॥ बोधिद्रुमश्चलदलः पिप्पलः कुंजराशनः ॥२०॥ अश्वत्थेथकपित्थेस्युर्दधित्थग्राहिम
न्मथाः ॥ तस्मिन्दधिफलःपुष्पफलदंतशठावपि ॥२१॥ उदुंबरोजंतुफलोयज्ञांगोहेमदुग्धकः ॥ कोविदारेचमरिकःकुद्दालोयुगप
त्रकः ॥२२॥ सप्तपर्णोविशालत्वक्शारदोविषमच्छदः ॥ आरग्वधेराजवृक्षशम्याकचतुरंगुलाः ॥२३॥ आरेवतव्याधिघातकृतमाल
सुवर्णकाः ॥ स्युर्जंबीरेदंतशठजंभजंभीरजंभलाः ॥२४॥ वरुणोवरणःसेतुस्तिक्तशाकःकुमारकः ॥ पुन्नागेपुरुषस्तुंगःकेस
रोदेववल्लभः ॥२५॥ पारिभद्रेनिंबतरुर्मंदारःपारिजातकः ॥ तिनिशेस्यंदनोनेमीरथद्रुरतिमुक्तकः ॥ वंजुलश्चित्रकृच्चाथद्वौपीत
नकपीतनौ ॥ आम्रातकेमधूकेतुगुडपुष्पमधुद्रुमौ ॥२७॥ वानप्रस्थमधुष्ठीलौजलजेत्रमधूलकः ॥ पीलौगुडफलस्त्रंसीतस्मिंस्तु

१४

गिरिसंभवे ॥२८॥ आक्षोटकंदरालौद्वावंकोटेतुनिकोचकः ॥ पलाशेकिंशुकःपर्णोवातपोथोऽथवेतसे ॥२९॥ रथाभ्रपुष्पविदुरशीत
वानीरवंजुलाः ॥ द्वौपरिव्याधविदुलौनादेयीचांबुवेतसे ॥३०॥ सौभांजनेशिग्रुतीक्ष्णगंधकाक्षीवमोचकाः ॥ रक्तोसौमधुशिग्रुःस्या
दरिष्टःफेनिलःसमौ ॥३१॥ बिल्वेशांडिल्यशैलूषौमालूरःश्रीफलावपि ॥ प्लक्षोजटीपर्कटीस्यान्न्यग्रोधोबहुपाद्वटः ॥३२॥ गालवःशा
बरोलोध्रस्तिरीटस्तिल्वमार्जनौ ॥ आम्रश्चूतोरसालोसौसहकारोतिसौरभः ॥३३॥ कुंभोलूखलकंक्लीबेकौशिकोगुग्गुलुःपुरः ॥ शे-
लुःश्लेष्मातकःशीतउद्दालोबहुवारकः ॥३४॥ राजादनंप्रियालःस्यात्सन्नकद्रुर्धनुष्पटः ॥ गंभारीसर्वतोभद्राकाश्मरीमधुपर्णिका
॥ श्रीपर्णीभद्रपर्णीचकाश्मर्यश्चाप्यथद्वयोः ॥ कर्कंधूर्बदरीकोलिःकोलंकुवलफेनिले ॥३६॥ सौवीरंबदरंघोंटाप्यथस्यात्स्वादुकंट
कः ॥ विकंकतःस्रुवावृक्षोग्रंथिलोव्याघ्रपादपि ॥३७॥ ऐरावतोनागरंगोनारंगोमुखवासनः ॥ जंबूसुरभिपत्राचराजजंबूर्म
हाफला ॥३८॥ सूक्ष्मपत्राक्षुद्रजंबूर्नादेयीभूमिजंबुका ॥ तिंदुकःस्फूर्जकःकालस्कंधश्चशितिसारके ॥३९॥ काकेंदुःकुल
कःकाकपीलुकःकाकतिंदुके ॥ गोलीढोझाटलोघंटापाटलिर्मोक्षमुष्ककौ ॥४०॥ तिलकःक्षुरकःश्रीमान्समौपिचु
लझावुकौ ॥ श्रीपर्णिकाकुमुदिकाकुंभीकैडर्यकट्फलौ ॥४१॥ क्रमुकःपट्टिकाख्यःस्यात्पट्टीलाक्षाप्रसादनः ॥ तूदस्तुयूपःक्रमु
कोब्रह्मण्योब्रह्मदारुच ॥४२॥ तूलंचनीपप्रियककदंबास्तुहलिप्रिये ॥ वीरवृक्षोरुष्करोग्निमुखीभल्लातकीत्रिषु ॥४३॥

को॰

कामांगोमधुदूतश्चमाकंदः पिकवल्लभः॥

गर्दभांडे कंदरालकपीतनसुपार्श्वकाः ॥ प्लक्षश्च तिंतिडी चिंचाम्लिकाथोपीतसारके ॥४४॥ सर्जकासनबंधुकपुष्पप्रियकजीव
काः ॥ सालेतु सर्जकार्श्याश्वकर्णकाः सस्यसंबरः ॥४५॥ नदीसर्जो वीरतरुरिंद्रद्रुः ककुभोर्जुनः ॥ राजादनः फलाध्यक्षः क्षीरि
कायामथद्वयोः ॥४६॥ इंगुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ॥ पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ॥ ४७ ॥ पिः
च्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः ॥ चिरिबिल्वो नक्तमालः करजश्च करंजके ॥४८॥ प्रकीर्यः पूतिकरजः पूतिकः कलि
मारकः ॥ करंजभेदाः षड्ग्रंथो मर्कट्यंगारवल्लरी ॥४९॥ रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥ गायत्री बालतनयः खदि
रो दंतधावनः ॥५०॥ अरिमेदो विट्खदिरे कदरः खदिरे सिते ॥ सोमवल्कोप्यथ व्याघ्रपुच्छगंधर्वहस्तकौ ॥५१॥ एरंडउरुबूकश्च रु
चकश्चित्रकश्च सः ॥ चंचुः पंचांगुलो मंडवर्धमानव्यडंबकाः ॥५२॥ अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा ॥ पिंडीतको म
रुबकः श्वसनः करहाटकः ॥५३॥ शल्यश्च मदने शक्रपादपः पारिभद्रकः ॥ भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥५४॥ पूतिका
ष्ठं च सप्त स्युर्देवदारुण्यथ द्वयोः ॥ पाटलिः पाटलामोघा काचस्थाली फलेरुहा ॥५५॥ कृष्णवृंता कुबेराक्षी श्यामा तु महिला ह्वया ॥-
लता गोवंदनी गुंद्रा प्रियंगुः फलिनी फली ॥५६॥ विष्वक्सेना गंधफली कारंभा प्रियकश्च सा ॥ मंडूकपर्णपत्रोर्णनटकट्वंगटुंटुकाः
॥५७॥ स्योनाकशुकनासर्क्षदीर्घवृंतकुटंनटाः ॥ शोणकश्चारलौ तिष्यफला त्वामलकी त्रिषु ॥५८॥ अमृता च वयस्था च त्रिलिंग



स्तु बिभीतकः ॥ नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥५९॥ अभया त्वव्यथा पथ्या कायस्था पूतनामृता ॥ हरीतकी हैम
वती चेतकी श्रेयसी शिवा ॥ ६०॥ पीतद्रुः सरलः पूतिकाष्ठं चाथ द्रुमोत्पलः ॥ कर्णिकारः परिव्याधो लकुचो लिकुचो डहुः ॥६१॥ प
नसः कंटकिफलो निचुलो हिज्जलोंबुजः ॥ काकोदुंबरिका फल्गुर्मलपूर्ज घने फला ॥६२॥ अरिष्टः सर्वतोभद्रो हिंगुनिर्यासमालकाः
॥ पिचुमंदश्च निंबोथ पिच्छिलागुरुशिंशपा ॥ ६३॥ कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ॥ भंडिलोप्यथ चांपेयश्चंपको हेमपु-
ष्पकः ॥६४॥ एतस्य कलिका गंधफली स्यादथ केसरे ॥ बकुलो वंजुलोशोके समौ करकदाडिमौ ॥६५॥ चांपेयः केसरो नागकेस
रः कांचनाह्वयः ॥ जया जयंती तर्कारी नादेयी वैजयंतिका ॥ ६६॥ श्रीपर्णमग्निमंथः स्यात्कणिका गणिकारिका ॥ जयोऽथ कुटजः श
क्रो वत्सको गिरिमल्लिका ॥ ६७॥ एतस्यैव कलिंगेंद्रयवभद्रयवं फले ॥ कृष्णपाकफलाविग्नसुषेणाः करमर्दके ॥६८॥ कालस्कंधस्त-
मालः स्यात्तापिच्छोप्यथ सिं[illegible]के ॥ सिंदुवारेंद्रसुरसौ निर्गुंडींद्राणिकेत्यपि ॥ ६९॥ वेणी खरा गरी देवताडो जीमूत इत्यपि ॥ श्रीहस्तिनी
तु भूरुंडी तृणशून्यं तु मल्लिका ॥७०॥ भूपदी शीतभीरुश्च सैवास्फोटा वनोद्भवा ॥ शेफालिका तु सुवहा निर्गुंडी नीलिका च सा ॥७१॥ सि
तासौ श्वेतसुरसा भूतवेश्यथ मागधी ॥ गणिका यूथिकांबष्ठा सा पीता हेमपुष्पिका ॥७२॥ अतिमुक्तः पुंड्रकः स्याद्वासंती माधवीलता
॥ सुमना मालती जातिः सप्तला नवमल्लिका ॥७३॥ माघ्यं कुंदं रक्तकस्तु बंधूको बंधुजीवकः ॥ सहा कुमारी तरणिरम्लानस्तु महासहा

तत्रशोणेकुरबकस्तत्रपीतेकुरंटकः॥ नीलीझिंटीद्वयोर्बाणादासीचार्तगलश्च सा ॥७५॥ सैरेयकस्तुझिंटीस्यात्तस्मिन्कुरबकोरु
णे॥ पीताकुरुंटकोझिंटीतस्मिन्सहचरीद्वयोः॥७६॥ ओड्रपुष्पंजपापुष्पंवज्रपुष्पंतिलस्ययत्॥ प्रतिहासशतप्रासचंडातहयमार-
काः॥ ७७॥ करवीरेकरीरेतुक्रकरग्रंथिलावुभौ॥ उन्मत्तःकितवोधूर्तोधत्तूरःकांचनाह्वयः॥७८॥ मातुलोमदनश्चास्यफलेमातुलपुत्र
कः॥ फलपूरोबीजपूरोरुचकोमातुलुंगके॥७९॥ समीरणोमरुबकःप्रस्थपुष्पःफणिज्जकः॥ जंबीरोप्यथपर्णासेकठिंजरकुठेरकौ॥
८०॥ सितेर्जकोत्रपाठीतुचित्रकोवन्हिसंज्ञकः॥ अर्काह्ववसुकास्फोटगणरूपविकीरणाः॥८१॥ मंदारश्चार्कपर्णोत्रशुक्लेलर्कप्रताप
सौ॥ शिवमल्लीपाशुपतएकाष्ठीलोबुकोवसुः॥८२॥ वृंदावृक्षादनीवृक्षरुहाजीवंतिकेत्यपि॥ वत्सादनीच्छिन्नरुहागुडूचीतंत्रिका
मृता॥८३॥ जीवंतिकासोमवल्लीविशल्यामधुपर्ण्यपि॥ मूर्वादेवीमधुरसामोरटातेजनिस्रवा॥८४॥ मधूलिकामधुश्रेणीगोकर्णी
पीलुपर्ण्यपि॥ पाठांबष्ठाविद्धकर्णीस्थापनीश्रेयसीरसा॥८५॥ एकाष्ठीलापापचेलीप्राचीनावनतिक्तिका॥ कटुःकटंबराशोकरोहि
णीकटुरोहिणी॥८६॥ मत्स्यपित्ताकृष्णभेदीचक्रांगीशकुलादनी॥ आत्मगुप्ताजहाव्यंडाकंडूराप्रावृषायणी॥८७॥ ऋष्यप्रोक्ता
शूकशिंबिःकपिकच्छूश्चमर्कटी॥ चित्रोपचित्रान्यग्रोधीद्रवंतीशंबरीवृषा॥८८॥ प्रत्यक्श्रेणीसुतश्रेणीचंडामूषकपर्ण्यपि॥ अपा
मार्गःशैखरिकोधामार्गवमयूरकौ॥८९॥ प्रत्यक्पर्णीकीशपर्णीकिणिहीखरमंजरी॥ हंजिकाब्राह्मणीपद्माभार्ङ्गीब्राह्मणयष्टिका

१६

॥ अंगारवल्लीबालेयशाकबर्बरवर्धकाः॥ मंजिष्ठाविकसाजिंगीसमंगाकालमेषिका॥९१॥ मंडूकपर्णीभंडीरीभंडीयोजनवल्ल्य
पि॥ यासोयवासोदुःस्पर्शोधन्वयासःकुनाशकः॥९२॥ रोदनीकच्छुरानंतासमुद्रांतादुरालभा॥ पृश्निपर्णीपृथक्पर्णीचित्रपर्ण्य
ङ्घ्रिपर्णिका॥९३॥ क्रोष्टुविन्नासिंहपुच्छीकलशिर्धावनिर्गुहा॥ निदिग्धिकास्पृशीव्याघ्रीबृहतीकंटकारिका॥९४॥ प्रचोदनीकु-
लीक्षुद्रादुःस्पर्शाराष्ट्रिकेत्यपि॥ नीलीकालाक्लीतकिकाग्रामीणामधुपर्णिका॥९५॥ रंजनीश्रीफलीतुत्थाद्रोणीदोलाचनीलिनी॥
अवल्गुजःसोमराजीसुवल्लिःसोमवल्लिका॥९६॥ कालमेषीकृष्णफलाबाकुचीपूतिफल्यपि॥ कृष्णोपकुल्यावैदेहीमागधीचपला
कणा॥९७॥ ऊषणापिप्पलीशौंडीकोलाथकरिपिप्पली॥ कपिवल्लीकोलवल्लीश्रेयसीवशिरःपुमान्॥९८॥ चव्यंतुचविकाकाकचिं
चीगुंजेतुकृष्णला॥ पलंकषात्विक्षुगंधाश्वदंष्ट्रास्वादुकंटकः॥९९॥ गोकंटकोगोक्षुरकोवनशृंगाटइत्यपि॥ विश्वाविषाप्रतिविषाति
विषोपविषारुणा॥१००॥ शृंगीमहौषधंचाथक्षीराविदुग्धिकासमे॥ शतमूलीबहुसुताभीरुरिंदीवरीवरी॥१॥ ऋष्यप्रोक्ताभीरु
पत्रीनारायण्यःशतावरी॥ अहेरुरथपीतद्रुःकालेयकहरिद्रवः॥२॥ दार्वीपचंपचादारुहरिद्रःपर्जनीत्यपि॥ वचोग्रगंधाषड्ग्रंथा
गोलोमीशतपर्विका॥३॥ शुक्लाहैमवतीवैद्यमातृसिंह्यौतुवासिका॥ वृषोटरूषःसिंहास्योवासकोवाजिदंतकः॥४॥ आस्फोता
गिरिकर्णीस्याद्विष्णुक्रांतापराजिता॥ इक्षुगंधातुकांडेक्षुकोकिलाक्षेक्षुरक्षुराः॥५॥ शालेयःस्याच्छीतशिवश्छत्रामधुरिकामि

नी

सिः ॥ मिश्रेयाप्यथसीहुंडोवज्रः स्नुक्स्त्री स्नुहीगुडा ॥ ६॥ समंतदुग्धाथोवेल्लममोघाचित्रतंडुला ॥ तंडुलश्चकृमिघ्नश्चविडंगंपुन्न
पुंसकं ॥ ७॥ बलावाट्यालकाघंटारवातुशणपुष्पिका ॥ मृद्वीकागोस्तनीद्राक्षास्वाद्वीमधुरसेतिच ॥ ८॥ सर्वानुभूतिः सरलात्रिपु
टात्रिवृतात्रिवृत् ॥ त्रिभंडीरोचनीश्यामापालिंद्योतुसुषेणिका ॥ ९॥ कालामसूरविदलार्धचंद्राकालमेषिका ॥ मधुकंक्लीतकंयष्टिम
धुकंमधुयष्टिका ॥ ११०॥ विदारीक्षीरशुक्लेक्षुगंधाक्रोष्ट्रीचयासिता ॥ अन्याक्षीरविदारीस्यान्महाश्वेतर्क्षगंधिका ॥ लांगलीशारदी-
तोयपिप्पलीशकुलादनी ॥ खराश्वाकारवीदीप्योमयूरोलोचमस्तकः ॥ १२॥ गोपीश्यामासारिवास्यादनंतोत्पलशारिवा ॥ यो
ग्यमृद्धिः सिद्धिलक्ष्म्यौवृद्धेरप्याह्वयाइमे ॥ १३॥ कदलीवारणबुसारंभामोचांशुमत्फला ॥ काष्ठीलामुद्गपर्णीतुकाकमुद्गास
हेत्यपि ॥ १४॥ वार्ताकीहिंगुलीसिंहीभंटाकीदुष्प्रधर्षिणी ॥ नाकुलीसुरसारास्नासुगंधागंधनाकुली ॥ १५॥ नकुलेष्टाभुजं
गाक्षीच्छत्राकीसुवहाचसा ॥ विदारिगंधांशुमतीसालपर्णीस्थिराध्रुवा ॥ १६॥ तुंडिकेरीसमुद्रांताकार्पासीबदरेतिच ॥ भार
द्वाजीतुसावन्याशृंगीतुऋषभोवृषः ॥ १७॥ गांगेरुकीनागबलाझषाह्नस्वगवेधुका ॥ धामार्गवोघोषकः स्यान्महाजालीसपीत
कः ॥ १८॥ ज्योत्स्नीपटोलिकाजालीनादेयीभूमिजंबुका ॥ स्याल्लांगलिक्यग्निशिखाकाकांगीकाकनासिका ॥ १९॥ गोधापदीतुसुव-
हामुसलीतालमूलिका ॥ अजशृंगीविषाणीस्याद्गोजिह्वादार्विकेसमे ॥ २०॥ तांबूलवल्लीतांबूलीनागवल्यप्यथद्विजा ॥ हरेणु



रेणुकाकौंतीकपिलाभस्मगंधिनी ॥ १२१॥ एलावालुकमैलेयंसुगंधिहरिवालुकं ॥ वालुकंचाथपालंक्यांमुकुंदः कुंदकुंदुरू ॥ २२
॥ बालंन्हीबेरबर्हिष्ठोदीच्यंकेशांबुनामच ॥ कालानुसार्यवृद्धाश्मपुष्पशीतशिवानितु ॥ २३॥ शैलेयंतालपर्णीतुदैत्यागंधकुटीमु
रा ॥ गंधिनीगजभक्ष्यातुसुवहासुरभीरसा ॥ २४॥ महेरणाकुंदुरुकीशल्लकीन्हादिनीतिच ॥ अग्निज्वालासुभिक्षेतुधातकीधा
तृपुष्पिका ॥ पृथ्वीकाचंद्रवालैलानिष्कुटीबहुलार्थसा ॥ २५॥ सूक्ष्मोपकुंचिकातुत्थाकोरंगीत्रिपुटात्रुटिः ॥ व्याधिः कुष्ठंपारिभाव्यं
व्याप्यंपाकलमुत्पलं ॥ २६॥ शंखिनीचोरपुष्पीस्यात्केशिन्यथवितुन्नकः ॥ झटामलाज्झटातालीशिवाच्चामलकीतिच ॥ २७॥ प्रपौं
डरीकंपुंडर्यमथतुन्नः कुबेरकः ॥ कुणिः कच्छः कांतलकोनंदीवृक्षोथराक्षसी ॥ २८॥ चंडाधनहरीक्षेमदुष्पत्रगणहासकाः ॥
व्योषायुधंव्याघ्रनखंकरजंचक्रकारकं ॥ २९॥ सुषिराविद्रुमलताकपोतांघ्रिर्नटीनली ॥ धमन्यंजनकेशीचहनुर्हट्टविलासिनी ॥
॥ ३०॥ शुक्तिः शंखः खुरः कोलदलंनखमथाढकी ॥ काक्षीमृत्स्नातुवरिकामृतालकसुराष्ट्रजे ॥ ३१॥ कुटंनटंदाशपुरंवानेयंपरिपे
लवं ॥ प्लवगोपुरगोनर्दकैवर्तीमुस्तकानिच ॥ ३१॥ ग्रंथिपर्णंशुकंबर्हिपुष्पंस्थौणेयकुक्कुरे ॥ मरुन्मालातुपिशुनास्पृक्कादेवील
तालघुः ॥ ३३॥ समुद्रांतावधूः कोटिवर्षालंकोपिकेत्यपि ॥ तपस्विनीजटामांसीजटिलालोमशामिसिः ॥ ३४॥ त्वक्पत्रमुत्कटंभृंगं
त्वचंचोचंवरांगकं ॥ कर्चूरकोद्राविडकः काल्पकोवेधमुख्यकः ॥ ३५॥ ओषध्योजातिमात्रेस्युरजातौसर्वमौषधं ॥ शाकाख्यंपत्र

पुष्पादितंडुलीयोल्पमारिषः ॥३६॥ विशल्याग्निशिखानंताफलिनीशक्रपुष्प्यपि ॥ स्याहृक्षगंधाच्छगलांत्र्यावेगी वृद्धदारकः ॥३७॥
जुंगोब्राह्मीतुमत्स्याक्षीवयस्थासोमवल्लरी ॥ पटुपर्णीहैमवतीस्वर्णक्षीरीहिमावती ॥३८॥ हयपुच्छीतुकांबोजीमाषपर्णीमहासहा
॥ तुंडिकेरीरक्तफलाबिंबिकापीलुपर्ण्यपि ॥३९॥ बर्बराकबरीतुंगीखरपुष्पाजगंधिका ॥ एलापर्णीतुसुवहारास्नायुक्तरसाचसा ॥
॥१४०॥ चांगेरीचुक्रिकादंतशठांबष्ठाम्ललोणिका ॥ सहस्रवेधीचुक्रोम्लवेतसः शतवेध्यपि ॥४१॥ नमस्कारीगंडकारीसमंगाखदिरेत्यपि ॥ जीवंतीजीवनीजीवाजीवनीयामधुस्रवा ॥४२॥ कूर्चशीर्षोमधुरकः शृंगन्हस्वांगजीवकाः ॥ किराततिक्तोभूनिंबोनार्यतिक्तोथसप्तला ॥४३॥ विमलासातलाभूरिफेनाचर्मकषेत्यपि ॥ वायसोलीस्वादुरसावयस्थाथमकूलकः ॥४४॥ निकुंभोदंतिकाप्रत्यक्श्रेण्युदुंबरपर्ण्यपि ॥ अजमोदातूग्रगंधाब्रह्मदर्भायवानिका ॥४५॥ मूलेपुष्करकाश्मीरपद्मपत्राणिपौष्करे ॥ अव्यथातिचरापद्माचारटीपद्मचारिणी ॥४६॥ कांपिल्यः कर्कशश्चंद्रोरक्तांगोरोचनीत्यपि ॥ प्रपुन्नाडस्त्वेडगजोदद्रुघ्नश्चक्रमर्दकः ॥४७॥ पद्माटउरणाख्यश्चपलांडुस्तुसुकंदकः ॥ लतार्कदुद्रुमौतत्रहरितेथमहौषधं ॥४८॥ लशुनंगृंजनारिष्टमहाकंदरसोनकाः ॥ पुनर्नवातुशोफघ्नीवितुन्नंसुनिषण्णकं ॥४९॥ स्याद्वातकः शीतलोपराजितासनपर्ण्यपि ॥ पारावतांघ्रिः कटभीपण्याज्योतिष्मतीलता ॥१५०॥ वार्षिकंत्रायमाणास्यात्त्रायंतीबलभद्रिका ॥ विष्वक्सेनाप्रियागृष्टिर्वाराहीबदरेतिच ॥५१॥ मार्कवोभृंगराजः स्यात्काकमाचीतुवा



यसी ॥ शतपुष्पासितच्छत्रातिच्छत्रामधुरामिसिः ॥५२॥ अवाक्पुष्पीकारवीच सरणातुप्रसारिणी ॥ तस्यांकटंभराराजबलाभद्रबलेतिच ॥५३॥ जनीजतूकारजनीजतुकृच्चक्रवर्तिनी ॥ संस्पर्शाथशटीगंधमूलीषड्ग्रंथिकेत्यपि ॥५४॥ कर्चूरोपिपलाशोथकारवेल्लः कटिल्लकः ॥ सुषवीचाथकुलकंपटोलस्तिक्तकः पटुः ॥५५॥ कूष्मांडकस्तुकर्कारुरुर्वारुः कर्कटीस्त्रियौ ॥ इक्ष्वाकुः कटुतुंबीस्यात्तुंब्यलाबुरुभेसमे ॥५६॥ चित्रागवाक्षीगोडुंबाविशालात्विंद्रवारुणी ॥ अर्शोघ्नः सूरणः कंदोगंडीरस्तुसमष्ठिला ॥५७॥ कलंब्युपोदिकास्त्रीतुमूलकंहिलमोचिका ॥ वास्तुकंशाकभेदाः स्युर्दूर्वातुशतपर्विका ॥५८॥ सहस्रवीर्याभार्गव्यौरुहानंताथसासिता ॥ गोलोमीशतवीर्याचगंडालीशकुलाक्षकः ॥५९॥ कुरुविंदोमेघनामामुस्तामुस्तकमस्त्रियां ॥ स्याद्भद्रमुस्तकोगुंद्रात्चूडालाचक्रलोच्चटा ॥१६०॥ वंशेत्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ शतपर्वायवफलोवेणुमस्करतेजनाः ॥६१॥ वेणवः कीचकास्तेस्युर्येस्वनंत्यनिलोद्धताः ॥ ग्रंथिर्नापर्वपरुषीगुंद्रस्तेजनकः शरः ॥६२॥ नडस्तुधमनः पोटगलोथोकाशमस्त्रियां ॥ इक्षुगंधापोटगलः पुंसिभूम्नितुबल्वजाः ॥६३॥ रसालइक्षुस्तद्भेदाः पुंड्रकांतारकादयः ॥ स्याद्वीरणंवीरतरंमूलेस्योशीरमस्त्रियां ॥६४॥ अभयंनलदंसेव्यममृणालंजलाशयं ॥ लामज्जकंलघुलयमवदाहेष्टकापथे ॥६५॥ नडादयस्तृणंगर्मुच्छ्यामाकप्रमुखाअपि ॥ अस्त्रीकुशंकुथोदर्भः पवित्रमथकत्तृणं ॥६६॥ पौरसौगंधिकंध्यामदेवजग्धकरोहिषं ॥ छत्रातिछत्रपा

लघ्रोमालातृणकभूस्तृणे ॥६७॥ शष्पंबालतृणंघासोयवसंतृणमर्जुनं ॥ तृणानांसंहतिस्तृण्यानड्यातुनडसंहतिः ॥६८॥ तृणराजाह्वयस्तालोनारिकेलस्तुलांगली ॥ घोंटातुपूगःक्रमुकोगुवाकःखपुरोस्यतु ॥६९॥ फलमुद्वेगमेतेचहिंतालसहितास्त्रयः ॥ खर्जूरः केतकीतालीखर्जूरीचतृणद्रुमाः ॥१७०॥ ॥ इतिवनौषधिवर्गः ॥ ॥ सिंहोमृगेंद्रः पंचास्योहर्यक्षः केसरीहरिः ॥ कंठीरवोमृगरिपुर्मृगदृष्टिर्मृगाशनः ॥पुंडरीकः पंचनखश्चित्रकायमृगद्विषः ॥" शार्दूलद्वीपिनौव्याघ्रेतरक्षस्तुमृगादनः ॥१॥ वराहः सूकरोघृष्टिः कोलः पोत्रीकिरिःकिटिः ॥ दंष्ट्रीघोणीस्तब्धरोमाक्रोडोभूदारइत्यपि ॥२॥ कपिप्लवंगप्लवगशाखामृगवलीमुखाः ॥ मर्कटोवानरः कीशोवनौकाअथभल्लुके ॥३॥ ऋक्षाच्छभल्लभल्लूकागंडकेखड्गखड्गिनौ ॥ लुलायोमहिषोवाहद्विषत्कासरसैरिभाः ॥४॥ स्त्रियांशिवाभूरिमायगोमायुमृगधूर्तकाः ॥ शृगालवंचुकक्रोष्टुफेरुफेरवजंबुकाः ॥५॥ ओतुर्बिडालोमार्जारोवृषदंशकआखुभुक् ॥ त्रयोगोधारगौधेरगौधेयागोधिकात्मजे ॥६॥ श्वाविन्तुशल्यस्तल्लोम्नि शललीशललंशलं ॥ वातप्रमीर्वातमृगः कोकईहामृगोवृकः ॥७॥ मृगेकुरंगवातायुहरिणाजिनयोनयः ॥ ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभेत्रिषु ॥८॥ कदलीकंदलीचीनश्चमूरुप्रियकावपि ॥ समूरुश्चेतिहरिणाअमीअजिनयोनयः ॥९॥ कृष्णसाररुरुन्यंकुरंकुशंबररौहिषाः ॥गोकर्णपृषतैणर्श्यरोहिताश्चमरोमृगाः ॥१०॥ गंधर्वः शरभोरामः सृमरोगवयः शशः ॥ इत्यादयोमृगेंद्राद्यागवाद्याः पशुजातयः ॥११॥ उंदुरुर्मूषकोप्याखुर्गिरिकाबालमूषिका ॥ छुच्छुंदरीगंधमुखीदीर्घतुंडीदिवांधिका ॥१२॥ सरटः कृकलासः स्यान्मुसलीगृहगोधिका ॥ लूतास्त्रीतंतुवायोर्णनाभमर्कटकाःसमाः ॥ नीलंगुस्तुकृमिः कर्णजलौकाःशतपद्युभे ॥१३॥ वृश्चिकः शूककीटःस्यादलिद्रुणौतुवृश्चिके ॥ पारावतःकलरवः कपोतोथशशादनः ॥१४॥ पत्रीश्येनउलूकेतुवायसारातिपेचकौ ॥ दिवांधः कौशिकोघूकोदिवाभीतोनिशाटनः ॥१५॥ व्याघ्राटःस्याद्भरद्वाजः खंजरीटस्तुखंजनः ॥ लोहपृष्ठस्तुकंकःस्यादथचाषः किकीदिविः ॥१६॥ कलिंगभृंगधूम्याटाअथः स्याच्छतपत्रकः ॥ दार्वाघाटोथसारंगस्तोककश्चातकः समौ ॥१७॥ कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥चटकः कलविंकःस्यात्तस्यस्त्रीचटकातयोः ॥१८॥ पुमपत्येचाटकैरःस्त्र्यपत्येचटकैवसा ॥ कर्करेटुः करेटुःस्यात्कृकणक्रकरौसमौ ॥१९॥ वनप्रियः परभृतः कोकिलः पिकइत्यपि ॥ काकेतुकरटारिष्टबलिपुष्टसकृत्प्रजाः ॥२०॥ ध्वांक्षात्मघोषपरभृद्बलिभुग्वायसाअपि ॥ द्रोणकाकस्तुकाकोलोमत्स्यूहः कालकंटकः ॥२१॥ आतापिचिल्लौदाक्षाय्यगृध्रौकीरशुकौसमौ ॥ क्रुङ् क्रौंचोथबकः कह्वः पुष्कराह्वस्तुसारसः ॥२२॥ कोकश्चक्रश्चक्रवाकोरथांगाह्वयनामकः ॥ कादंबः कलहंसःस्यादुत्क्रोशकुररौसमौ ॥२३॥ हंसास्तुश्वेतगरुतश्चक्रांगामानसौकसः ॥ राजहंसास्तुतेचंचुचरणैर्लोहितैःसिताः ॥२४॥ मलिनैर्मल्लिकाख्यास्तेधार्तराष्ट्राःसितेतरैः ॥ शरारिराटिराडिश्चबलाकाबिसकंठिका ॥२५॥ हंसस्ययोषिद्वरटासारसस्यतुलक्ष्मणा ॥ जतुकाजिनपत्रास्यात्सरोघ्नीतैलपायिका ॥२६॥ वर्वणी

मक्षिकानीलासरघामधुमक्षिका॥ पतंगिकापुत्तिकास्याद्दंशस्तुवनमक्षिका॥२७॥ दंशीतज्जातिरल्पास्याद्गंधोली वरटाद्वयोः॥
भृंगारीझीरुकाचीरीझिल्लिकाचसमाइमाः॥२८॥ समौपतंगशलभौखद्योतोज्योतिरिंगणः॥ मधुव्रतोमधुकरोमधुलिण्मधुपालि
नः॥२९॥ द्विरेफपुष्पलिड्भृंगषट्पदभ्रमरालयः॥ मयूरोबर्हिणोबर्हीनीलकंठोभुजंगभुक्॥३०॥ शिखावलः शिखीकेकीमेघ
नादानुलास्यपि॥ केकावाणीमयूरस्यसमौचंद्रकमेचकौ॥३१॥ शिखाचूडाशिखंडस्तुपिच्छबर्हेनपुंसके॥ खगेविहंगविहग-
विहंगमविहायसः॥३२॥ शकुंतिपक्षिशकुनिशकुंतशकुनद्विजाः॥ पतत्रिपत्रिपतगपतत्पत्ररथांडजाः॥३३॥ नगौकोवाजिवि
किरविविष्किरपतत्रयः॥ नीडोद्भवागरुत्मंतः पित्संतोनभसंगमाः॥३४॥ तेषांविशेषाहारीतोमद्गुः कारंडवः प्लवः॥ तित्तिरिःकु
क्कुभोलावोजीवंजीवश्चकोरकः॥३५॥ कोयष्टिकष्टिट्टिभकोवर्तकोवर्तिकादयः॥ गरुत्पक्षच्छदाः पत्रंपतत्रंचतनूरुहं॥३६॥स्त्री
पक्षतिः पक्षमूलंचंचुस्त्रोटिरुभेस्त्रियौ॥ प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः॥३७॥ पेशीकोशोद्विहीनेंडंकुलायोनीडम
स्त्रियां॥ पोतः पाकोर्भकोडिंभः पृथुकः शावकः शिशुः॥३८॥ स्त्रीपुंसौमिथुनंद्वंद्वंयुग्मंतुयुगलंयुगं॥ समूहोनिवहव्यूहसंदोह-
विसरव्रजाः॥३९॥ स्तोमौघनिकरव्रातवारसंघातसंचयाः॥ समुदायः समुदयः समवायश्चयोगणः॥४०॥ स्त्रियांतुसंहतिर्वृंदं-
निकुरंबंकदंबकं॥ वृंदभेदाः समैर्वर्गः संघसार्थौतुजंतुभिः॥४१॥ सजातीयैः कुलंयूथंतिरश्चांपुन्नपुंसकं॥ पशूनांसमजोन्ये



षांसमाजोथसधर्मिणां॥४२॥ स्यान्निकायः पुंजराशीतूत्करः कूटमस्त्रियां॥ कापोतशौकमायूरतैत्तिरादीनितद्गणे॥४३
॥ गृहासक्ताः पक्षिमृगाश्छेकास्तेगृह्यकाश्चते॥४४॥ ॥इतिसिंहादिवर्गः॥ ॥मनुष्यामानुषामर्त्यामनुजामानवानराः॥
स्युः पुमांसः पंचजनाः पुरुषाः पूरुषानरः॥१॥ स्त्रीयोषिदबलायोषानारीसीमंतिनीवधूः॥ प्रतीपदर्शिनीवामावनितामहिलातथा
॥ विशेषास्त्वंगनाभीरुः कामिनीवामलोचना॥ प्रमदामानिनीकांताललनाचनितंबिनी॥३॥ सुंदरीरमणीरामाकोपनासैवभामि
नी॥ वरारोहामत्तकाशिन्युत्तमावरवर्णिनी॥४॥ कृताभिषेकामहिषीभोगिन्योऽन्यानृपस्त्रियः॥ पत्नीपाणिगृहीतीचद्वितीयास
हधर्मिणी॥५॥ भार्याजायाथपुंभूम्निदाराःस्यात्तुकुटुंबिनी॥ पुरंध्रीसुचरित्रातुसतीसाध्वीपतिव्रता॥६॥ कृतसापत्निकाध्यूढाधि
विन्नाथस्वयंवरा॥ पतिंवरात्चवर्याचकुलस्त्रीकुलपालिका॥७॥ कन्याकुमारीगौरीतुनग्निकानागतार्तवा॥ स्यान्मध्यमादृष्टरजास्त
रुणीयुवतिः समे॥८॥ समास्नुषाजनीवध्वश्चिरिंटीतुसुवासिनी॥ इच्छावतीकामुकास्याद्वृषस्यंतीतुकामुकी॥९॥ कांतार्थिनीतु-
यायातिसंकेतंसाभिसारिका॥ पुंश्चलीधर्षणीबंधक्यसतीकुलटेत्वरी॥१०॥ स्वैरिणीपांसुलाचस्यादशिश्वीशिशुनाविना॥ अवी
रानिष्पतिसुताविश्वस्ताविधवेसमे॥११॥ आलिः सखीवयस्याथपतिवत्नीसभर्तृका॥ वृद्धापलिक्नीप्राज्ञीतुप्रज्ञाप्राज्ञातुधीमती॥
१२॥ शूद्रीशूद्रस्यभार्यास्याच्छूद्रातज्जातिरेवच॥ आभीरीतुमहाशूद्रीजातिपुंयोगयोः समा॥१३॥ आर्याणीस्वयमर्यास्यात्

स्यादाचार्यापिचस्वतः॥ आचार्यानीतुपुंयोगेस्यादर्यीक्षत्रियीतथा ॥उपाध्यायान्युपाध्यायी

क्षत्रियाक्षत्रियाण्यपि ॥उपाध्यायाप्युपाध्यायीपोटास्त्रीपुंसलक्षणा ॥१५॥वीरपत्नीवीरभार्यावीरमातातुवीरसूः॥जातापत्याप्रजाताचप्रसूताचप्रसूतिका ॥१६॥स्त्रीनग्निकाकोटवीस्याद्दूतीसंचारिकेसमे ॥कात्यायन्यर्द्धवृद्धायाकाषायवसनाधवा ॥१७॥सैरंध्रीपरवेश्मस्थास्ववशाशिल्पकारिका॥ असिक्नीस्यादवृद्धायाप्रेष्यांतःपुरचारिणी ॥१८॥वारस्त्रीगणिकावेश्यारूपाजीवाथसाजनैः॥सत्कृतावारमुख्यास्यात्कुट्टनीशंभलीसमे॥१९॥विप्राश्निकात्वीक्षणिकादैवज्ञाथरजस्वला॥ स्त्रीधर्मिण्यविरात्रेयीमलिनीपुष्पवत्यपि ॥२०॥ऋतुमत्यप्युदक्यापिस्याद्रजःपुष्पमार्तवं ॥ श्रद्धालुर्दोहदवतीनिष्कलाविगतार्तवा ॥२१॥ आपन्नसत्वास्याद्गुर्विण्यंतर्वत्नीचगर्भिणी ॥ गणिकादेस्तुगाणिक्यंगार्भिणंयौवतंगणे ॥२२॥पुनर्भूर्दिधिषूरूढाद्विस्तस्यादिधिषुःपतिः॥ सतुद्विजोग्रेदिधिषूःसैववयस्यकुटुंबिनी ॥२३॥कानीनःकन्यकाजातःसुतोथसुभगासुतः॥सौभागिनेयःस्यात्पारस्त्रैणेयस्तुपरस्त्रियाः॥२४॥पैतृष्वसेयःस्यात्पैतृष्वस्रीयश्चपितृष्वसुः॥सुतोमातृष्वसुश्चैवंवैमात्रेयोविमातृजः॥२५॥ अथबांधकिनेयःस्याद्बंधुलश्चासतीसुतः॥ कौलटेरःकौलटेयोभिक्षुकीतुसतीयदि ॥२६॥ तदाकौलटिनेयोस्याःकौलटेयोपिचात्मजः॥ आत्मजस्तनयःसूनुःसुतःपुत्रस्त्रियांत्वमी ॥२७॥ आहुर्दुहितरंसर्वेपत्यंतोकंतयोःसमे॥ स्वजातेत्वौरसौरस्यौतातस्तुजनकःपिता ॥२८॥जनयित्रीप्रसूर्माताजननीभगिनीस्वसा॥ ननांदातुस्वसापत्युर्नप्त्रीपौत्रीसुतात्मजा ॥२९॥भार्यास्तु-

भ्रातृवर्गस्ययातरःस्युःपरस्परं ॥प्रजावतीभ्रातृजायामातुलानीतुमातुली॥३०॥ पतिपत्न्योःप्रसूःश्वश्रूःश्वशुरस्तुपितातयोः॥पितुर्भ्रातापितृव्यःस्यान्मातुर्भ्रातातुमातुलः॥३१॥ श्यालाःस्युर्भ्रातरःपत्न्याःस्वामिनोदेवृदेवरौ ॥ स्वस्रीयोभागिनेयः-स्याज्जामातादुहितुःपतिः॥३२॥पितामहःपितृपितातत्पिताप्रपितामहः॥ मातुर्मातामहाद्यैवंसपिंडास्तुसनाभयः॥३३॥समानोदर्यसोदर्यसगर्भ्यसहजाःसमाः॥ सगोत्रबांधवज्ञातिबंधुस्वस्वजनाःसमाः॥३४॥ ज्ञातेयंबंधुतातेषांक्रमाद्भावसमूहयोः॥धवःप्रियःपतिर्भर्ताजारस्तूपपतिःसमौ ॥३५॥अमृतेजारजःकुंडोमृतेभर्तरिगोलकः॥भ्रात्रीयोभ्रातृजोभ्रातृभगिन्यौभ्रातरावुभौ॥३६॥मातापितरौपितरौमातरपितरौप्रसूजनयितारौ ॥ श्वश्रूश्वशुरौश्वशुरौपुत्रौपुत्रश्चदुहिताच ॥३७॥ दंपतीजंपतीजायापतीभार्यापतीन्चतौ ॥गर्भाशयोजरायुःस्यादुल्बंचकललोस्त्रियां ॥३८॥सूतिमासोवैजननोगर्भोभ्रूणइमौसमौ ॥तृतीयाप्रकृतिःषंढःक्लीबःपंडोनपुंसके॥३९॥ शिशुत्वंशैशवंबाल्यंतारुण्यंयौवनंसमे ॥स्यात्स्थाविरंतुवृद्धत्वंवृद्धसंघेपिवार्धकं॥४०॥पलितंजरसाशौक्ल्यंकेशादौविस्रसाजरा॥ स्यादुत्तानशयाडिंभास्तनपाचस्तनंधयी ॥४१॥ बालस्तुस्यान्माणवकोवयस्थस्तरुणोयुवा॥प्रवयाःस्थविरोवृद्धोजीनोजीर्णोजरन्नपि॥४२॥वर्षीयान्दशमीज्यायान्पूर्वजस्त्वग्रियोग्रजः॥ जघन्यजेस्युःकनिष्ठयवीयोवरजानुजाः॥ ४३॥अमांसोदुर्बलश्छातोबलवान्मांसलोंसलः॥ तुंदिलस्तुंदिभस्तुंदीवृहत्कुक्षिःपिचंडिलः॥ ४४॥अवटीटोवनाटश्चावभ्र

टोनटनासिके ॥ केशवः केशिकः केशी बलिनो बलिभः समौ ॥ ४५ ॥ विकलांगस्त्वपोगंडः खर्वो ह्रस्वश्च वामनः ॥ खरणास्यात्खरणसो
विग्रस्तु गतनासिके ॥ ४६ ॥ खुरणास्यात्खुरणसः प्रज्ञुः प्रगतजानुकः ॥ ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः संहतजानुकः ॥ ४७ ॥ स्यादे
डे बधिरः कुब्जे गडुलः कुकरे कुणिः ॥ पृश्निरल्पतनौ श्रोणः पंगौ मुंडस्तु मुंडिते ॥ ४८ ॥ बलिरः केकरे खोडे खंजस्त्रिषु जरावराः ॥ जडु
लः कालकः पिप्लुस्तिलकस्तिलकालकाः ॥ ४९ ॥ अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया ॥ भेषजौषधभैषज्यान्यगदो जायुरित्य
पि ॥ ५० ॥ स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः ॥ क्षयः शोषश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः ॥ ५१ ॥ स्त्री क्षुत् क्षुतं क्षवः पुंसि का
सस्तु क्षवथुः पुमान् ॥ शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका ॥ ५२ ॥ किलाससिध्मे कच्छ्वां तु पामपामाविचर्चिका ॥ कंडूः खर्जू-
श्च कंडूया विस्फोटः पिटकस्त्रिषु ॥ ५३ ॥ व्रणोऽस्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान् ॥ कोठो मंडलकं कुष्ठः श्वित्रे दुर्नामकार्शसी ॥ ५४
॥ आनाहस्तु निबंधः स्याद्ग्रहणीरुक्प्रवाहिका ॥ प्रच्छर्दिका वमीच स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥ व्याधिभेदा विद्रधिः स्त्री ज्वरमेह
भगंदराः ॥ श्लीपदं पादवल्मीकं केशघ्नस्त्विंद्रलुप्तकं ॥ ५६ ॥ अश्मरी मूत्रकृच्छ्रं स्यात्पूर्वे शुक्रावधेस्त्रिषु ॥ रोगहार्यगदंकारो भिषग्वै
द्यौ चिकित्सके ॥ ५७ ॥ वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः ॥ ५८ ॥ आतुरोऽभ्यमि
तोऽभ्यांतः समौ पामनकच्छुरौ ॥ दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः ॥ ५९ ॥ वातकी वातरोगी स्यात्सातिसारोऽतिसारकी ॥ स्युः क्लि



न्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी ॥ ६० ॥ उन्मत्त उन्मादवति श्लेष्मणः श्लेष्मलः कफी ॥ न्युब्जो भुग्ने रुजा वृद्धनाभौ तुंदिल
तुंदिभौ ॥ ६१ ॥ किलासी सिध्मलोंऽधोऽदृङ्मूर्छाले मूर्तमूर्छितौ ॥ शुक्रं तेजोरेतसी च बीजवीर्येंद्रियाणि च ॥ ६२ ॥ मायुः पित्तं कफः श्लेष्मा-
स्त्रियां तु त्वगसृग्धरा ॥ पिशितं तरसं मांसं पललं क्रव्यमामिषं ॥ ६३ ॥ उत्तप्तं शुष्कमांसं स्यात्तद्वल्लूरं त्रिलिंगकं ॥ रुधिरेऽसृग्लोहितास्र
रक्तक्षतजशोणितं ॥ ६४ ॥ बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ॥ पश्चाद्ग्रीवाशिरा मन्या नाडी तु धमनिः शिरा ॥ ६५ ॥ तिलकं क्लोमम
स्तिष्कं गोर्दं किट्टं मलोऽस्त्रियां ॥ अंत्रं पुरीतद्गुल्मस्तु प्लीहा पुंस्यथ वस्नसा ॥ ६६ ॥ स्नायुः स्त्रियां कालखंडयकृती तु समे इमे ॥ सृणि
कास्यंदिनी लाला दूषिका नेत्रयोर्मलं ॥ "नासामलं तु सिंघाणं पिंजूषं कर्णयोर्मलं ॥" मूत्रं प्रस्रावउच्चारावस्करौ शमलं शकृत् ॥ पु
रीषं गूथवर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ ॥ ६८ ॥ स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ॥ स्याच्छरीरास्थ्नि कंकालः पृष्ठास्थ्नि तु
कशेरुका ॥ ६९ ॥ शिरोऽस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ॥ अंगं प्रतीकोऽवयवोऽपघनोऽथ कलेवरं ॥ ७० ॥ गात्रं वपुः संहननं शरीरं
वर्ष्म विग्रहः ॥ कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुः स्तनूः ॥ ७१ ॥ पादाग्रं प्रपदं पादः पदंघ्रिश्चरणोऽस्त्रियां ॥ तद्ग्रंथी घुटिके गुल्फौ
पुमान्पार्ष्णिरधस्तयोः ॥ ७२ ॥ सक्थि क्लीबे पुमानूरुस्तत्संधिः पुंसि वंक्षणः ॥ ७३ ॥ गुदं त्वपानं पायुर्ना बस्तिर्नाभेरधो द्वयोः ॥ कटो ना
श्रोणिफलकं कटिः श्रोणिः ककुद्मती ॥ ७४ ॥ पश्चान्नितंबः स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ कूपकौ तु नितंबस्थौ द्वयहीने कुकुंदरे ॥

जंघा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियां ॥

स्त्रियांस्फिचौकटिप्रोथावुपस्थोवक्ष्यमाणयोः ॥ भगंयोनिर्द्वयोः शिश्नोमेढ्रं मेहनशेफसी ॥ ७६॥ मुष्कोंडकोशोवृषणः पृष्ठवंशा
धरेत्रिकं॥ पिचंडकुक्षीजठरोदरंतुंदंस्तनौकुचौ॥ ७७॥ चूचुकंतुकुचाग्रंस्यान्ननाक्रोडंभुजांतरं॥ उरोवत्सं चवक्षश्च पृष्ठंतुचरमंत
नोः ७८॥ स्कंधोभुजशिरोंसोस्त्रीसंधीतस्यैवजत्रुणी॥ बाहुमूलेउभेकक्षौपार्श्वमस्त्रीतयोरधः॥ ७९॥ मध्यमंचावलग्नंचमे-
ध्योस्त्रीद्वौपरौद्वयोः॥ भुजबाहूप्रवेष्टोदोः स्यात्कफोणिस्तुकूर्परः॥ ८०॥ अस्योपरिप्रगंडः स्यात्प्रकोष्ठस्तस्यचाप्यधः॥ मणिबं
धादाकनिष्ठंकरस्य करभोबहिः॥ ८१॥ पंचशाखः शयः पाणिस्तर्जनीस्यात्प्रदेशिनी॥ अंगुल्यः करशाखास्युः पुंस्यंगुष्ठः प्रदेशि
नी॥ ८२॥ मध्यमानामिकाचापिकनिष्ठाचेतिताः क्रमात् ॥ पुनर्भवः कररुहोनखोस्त्रीनखरोस्त्रियां॥ ८३॥ प्रादेशतालगोकर्णास्त
र्जन्यादियुतेतते॥ अंगुष्ठेसकनिष्ठेस्याद्वितस्तिर्द्वादशांगुलः॥ ८४॥ पाणौचपेटप्रतलप्रहस्ताविस्तृतांगुलौ॥ द्वौसंहतौसंहतल
प्रतलौवामदक्षिणौ॥ ८५॥ पाणिर्निकुब्जः प्रसृतिस्तौयुतावंजलिः पुमान्॥ प्रकोष्ठेविस्तृतकरेहस्तोमुष्ट्याचबद्धया॥ ८६॥ सरत्निः
स्यादरत्निस्तुनिष्कनिष्ठेनमुष्टिना॥ व्यामोबाह्वोः सकरयोस्ततयोस्तिर्यगंतरं॥ ८७॥ ऊर्ध्वविस्तृतदोष्पाणिनृमानेपौरुषंत्रिषु॥
कंठोगलोथग्रीवायांशिरोधिः कंधरेत्यपि॥ ८८॥ कंबुग्रीवात्रिरेखासाऽवटुर्घाटाकृकाटिका॥ वक्त्रास्येवदनंतुंडमाननंलपनंमुखं॥
८९॥ क्लीबेघ्राणंगंधवहाघोणानासाचनासिका॥ ओष्ठाधरौतुरदनछदौदशनवाससी॥ ९०॥ अधस्ताच्चिबुकंगंडौकपोलौतत्परा



हनुः॥ रदनादशनादंतारदास्तालुतुकाकुदं॥ ९१॥ रसज्ञारसनाजिह्वाप्रांतावोष्ठस्यसृक्किणी॥ ललाटमलिकंगोधिरूर्ध्वेदृग्भ्यां
भ्रुवौस्त्रियौ॥ ९२॥ कूर्चमस्त्रीभ्रुवोर्मध्यंतारकाक्ष्णः कनीनिका॥ लोचनंनयनंनेत्रमीक्षणंचक्षुरक्षिणी॥ ९३॥ दृग्दृष्टिचास्त्रुनेत्रांबु
रोदनंचास्त्रमश्रुच॥ अपांगौनेत्रयोरंतौकटाक्षोऽपांगदर्शने॥ ९४॥ कर्णशब्दग्रहौश्रोत्रंश्रुतिः स्त्रीश्रवणंश्रवः॥ उत्तमांगंशिरःशी
र्षंमूर्धानामस्तकोस्त्रियां॥ ९५॥ चिकुरः कुंतलोबालः कचः केशः शिरोरुहः॥ तद्वृंदेकैशिकंकैश्यमलकाश्चूर्णकुंतलाः॥ ९६॥ तेललाटेभ्र
मरकाः काकपक्षः शिखंडकः॥ कबरीकेशवेशोथधम्मिल्लः संयताः कचाः॥ ९७॥ शिखाचूडाकेशपाशीव्रतिनस्तुसटाजटा॥ वेणिःप्र
वेणीशीर्षण्यशिरस्योविशदेकचे॥ ९८॥ पाशः पक्षश्चहस्तश्चकलापार्थाः कचात्परे॥ तनूरुहंरोमलोमतद्वृद्धौश्मश्रुपुंमुखे॥ ९९॥ आ
कल्पवेषोनेपथ्यंप्रतिकर्मप्रसाधनं॥ दशैतेत्रिष्वलंकर्तालंकरिष्णुश्चमंडितः॥ १००॥ प्रसाधितोलंकृतश्चभूषितश्चपरिष्कृतः॥ विभ्रा
ड्भ्राजिष्णुरोचिष्णुभूषणंस्यादलंक्रिया॥ १॥ अलंकारस्त्वाभरणंपरिष्कारोविभूषणं॥ मंडनंचाथमुकुटंकिरीटंपुंनपुंसकं॥ २॥-
चूडामणिः शिरोरत्नंतरलोहारमध्यगः॥ ३॥ बालपाश्यापारितथ्यापत्रपाश्याललाटिका॥ कर्णिकातालपत्रंस्यात्कुंडलंकर्णवेष्ट
नं॥ ग्रैवेयकंकंठभूषालंबनंस्याल्ललंतिका॥ ४॥ स्वर्णैः प्रालंबिकाथोरः सूत्रिकामौक्तिकैः कृता॥ हारोमुक्तावलीदेवछंदोसौश
तयष्टिका॥ १०५॥ हारभेदायष्टिभेदागुच्छगुच्छार्धगोस्तनाः॥ अर्धहारोमाणवकएकावल्येकयष्टिका॥ ६॥ सैवनक्षत्रमाला-

स्यात्सप्तविंशतिमौक्तिकैः ॥ आवापकः पारिहार्यः कटकोवलयोस्त्रियां ॥ ७ ॥ केयूरमंगदंतुल्येअंगुलीयकमूर्मिका ॥ साक्षरांगुलि
मुद्रास्यात्कंकणंकरभूषणं ॥ ८ ॥ स्त्रीकट्यांमेखलाकांचीसप्तकीरशनातथा ॥ क्लीबेसारसनंचाथपुंस्कट्यांशृंखलंत्रिषु ॥ ९ ॥ पादां
गुदंतुलाकोटिर्मंजीरोनूपुरोस्त्रियां ॥ हंसकः पादकटकः किंकिणीक्षुद्रघंटिका ॥ ११० ॥ त्वक्फलकृमिरोमाणिवस्त्रयोनिर्दशत्रिषु
॥ वाल्कंक्षौमादिफालंतुकार्पासंबादरंचतत् ॥ ११ ॥ कौशेयंकृमिकोशोत्थंरांकवंमृगरोमजं ॥ अनाहतंनिष्प्रवाणितंत्रकंचनवांबरं
॥ १२ ॥ तत्स्यादुद्गमनीयंयद्धौतयोर्वस्त्रयोर्युगं ॥ पत्रोर्णंधौतकौशेयंबहुमूल्यंमहाधनं ॥ १३ ॥ क्षौमंदुकूलंस्याद्वेतुनिवीतंप्रावृतं
त्रिषु ॥ स्त्रियांबहुत्वेव[illegible]स्यदशास्युर्वस्त्वयोर्द्वयोः ॥ १४ ॥ दैर्घ्यमायामआनाहः परिणाहोविशालता ॥ पटच्चरंजीर्णवस्त्रंसमौ
नक्तककर्पटौ ॥ १५ ॥ वस्त्रमाच्छादनंवासश्चैलंवसनमंशुकं ॥ सुचेलकः पटोःस्त्रीस्याद्वराशिः स्थूलशाटकः ॥ १६ ॥ निचोलः प्रच्छ
दपटः समौरल्लककंबलौ ॥ अंतरीयोपसंव्यानपरिधानान्यधोंशुके ॥ १७ ॥ द्वौप्रावारोत्तरासंगौसमौबृहतिकातथा ॥ संव्यानमुत्त
रीयंचचोलः कूर्पासकोस्त्रियां ॥ १८ ॥ नीशारः स्यात्प्रावरणेहिमानिलनिवारणे ॥ अर्धोरुकंवरस्त्रीणांस्याच्चंडातकमंशुकं ॥ १९ ॥
स्यात्त्रिषाप्रपदीनंतत्प्राप्नोत्याप्रपदंहियत् ॥ अस्त्रीवितानमुल्लोचोदूष्याद्यंवस्त्रवेश्मनि ॥ २० ॥ प्रतिसीराजवनिकास्यात्तिरस्क
रिणीचसा ॥ परिकर्मांगसंस्कारः स्यान्मार्ष्टिर्मार्जनामृजा ॥ २१ ॥ उद्वर्तनोत्सादनेद्वेक्लीबेआप्लावआप्लवः ॥ स्नानंचर्चातुचार्चि-

क्यंस्थासकोथप्रबोधनं ॥ २२ ॥ अनुबोधः पत्रलेखापत्रांगुलिरिमेसमे ॥ तमालपत्रतिलकचित्रकाणिविशेषकं ॥ २३ ॥ द्वितीयं
चतुरीयंचनस्त्रियामथकुंकुमं ॥ काश्मीरजन्माग्निशिखंवरंबाल्हीकपीतने ॥ २४ ॥ रक्तसंकोचपिशुनंधीरंलोहितचंदने ॥ लाक्षाला
क्षाजतुक्लीबेयावोलक्तोद्रुमामयः ॥ २५ ॥ लवंगंदेवकुसुमंश्रीसंज्ञमथजायकं ॥ कालीयकंचकालानुसार्यंचाथसमार्थकं ॥ २६ ॥ वंशि
कागुरुराजार्हलोहंकृमिजजोंगकं ॥ कालागुर्वगुरुः स्यात्तुमंगल्यामल्लिगंधियत् ॥ २७ ॥ यक्ष[illegible]धूपः सर्जरसोरालसर्वरसावपि ॥ बहु
रूपोप्यथवृकधूपकृत्रिमधूपकौ ॥ २८ ॥ तुरुष्कः पिंडकः सिल्होयावनोप्यथपायसः ॥ श्रीवासो[illegible]धूपोपिश्रीवेष्टसरलद्रवौ ॥ २९ ॥
मृगनाभिर्मृगमदः कस्तूरीचाथकोलकं ॥ कंकोलकंकोशफलमथकर्पूरमस्त्रियां ॥ ३० ॥ घनसारश्चंद्रसंज्ञः सिताभ्रोहिमवालुका ॥
गंधसारोमलयजोभद्रश्रीश्चंदनोस्त्रियां ॥ ३१ ॥ तैलपर्णिकगोशीर्षेहरिचंदनमस्त्रियां ॥ तिलपर्णीतुपत्रांगंरंजनंरक्तचंदनं ॥ ३२ ॥
कुचंदनंचाथजातीकोशजातीफलेसमे ॥ कर्पूरागरुकस्तूरीकंकोलैर्यक्षकर्दमः ॥ ३३ ॥ गात्रानुलेपनीवर्तिर्वर्णकंस्याद्विलेपनं ॥ चूर्णा
निवासयोगास्युर्भावितंवासितंत्रिषु ॥ ३४ ॥ संस्कारोगंधमाल्याद्यैर्यस्यात्तदधिवासनं ॥ माल्यंमालास्रजौमूर्ध्निकेशमध्येतुगर्भकः
॥ ३५ ॥ प्रभ्रष्टकंशिखालंबिपुरोन्यस्तंललामकं ॥ प्रालंबमृजुलंबिस्यात्कंठाद्वैकक्षिकंतुतत् ॥ ३६ ॥ यत्तिर्यक्क्षिप्तमुरसिशिखास्वा
पीडशेखरौ ॥ रचनास्यात्परिस्पंदआभोगः परिपूर्णता ॥ ३७ ॥ उपधानंतूपबर्हः शय्यायांशयनीयवत् ॥ शयनंमंचपर्यंकपल्यंकाः

य

खड्वयासमाः ॥३५॥ गेंदुकः कंदुकोदीपः प्रदीपः पीठमासनं ॥ समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः ॥३९॥ प्रसाधनीकंकतिकापिष्टा
तः पटवासकः ॥ दर्पणेमुकुरादर्शौव्यजनंतालवृंतकं ॥१४०॥ ॥ इतिमनुष्यवर्गः ॥ ॥ संततिर्गोत्रजननकुलान्यभिज
नान्वयौ ॥ वंशोन्ववायः संतानोवर्णाः स्युर्ब्राह्मणादयः ॥१॥ विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमितिस्मृतं ॥ राजबीजीराजवंश्यो
बीज्यस्तुकुलसंभवः ॥२॥ महाकुलकुलीनार्यसभ्यसज्जनसाधवः ॥ ब्रह्मचारीगृहीवानप्रस्थोभिक्षुश्चतुष्टये ॥३॥ आश्रमोस्त्री
द्विजात्यग्रजन्मभूदेववाडवाः ॥ विप्रश्चब्राह्मणोसौषट्कर्मायागादिभिर्युतः ॥४॥ विद्वान्विपश्चिद्दोषज्ञः सन्सुधीः कोविदोबुधः
॥ धीरोमनीषीज्ञः प्राज्ञः संख्यावान्पंडितः कविः ॥५॥ धीमान्सूरिः कृतीकृष्टिर्लब्धवर्णोविचक्षणः ॥ दूरदर्शीदीर्घदर्शीश्रोत्रिय
श्छांदसौसमौ ॥६॥ मीमांसकोजैमिनीयोवेदांतीब्रह्मवादिनि ॥ वैशेषिकः स्यादौलूक्यः सौगतः शून्यवादिनि ॥७॥ नैयायि
कस्त्वक्षपादः स्यात्स्याद्वादिकआर्ह[illegible]ः ॥ चार्वाकलौकायतिकौसत्कार्येसांख्यकापि[illegible] ॥८॥ उपाध्यायोध्यापकोथस्यान्निषे
कादिकृद्गुरुः ॥ मंत्रव्याख्याकृदाचार्यआदेष्टात्वध्वरेव्रती ॥९॥ यष्टाचयजमानश्चससोमवतिदीक्षितः ॥ इज्याशीलोयाय
जूकोयज्वातुविधिनेष्टवान् ॥१०॥ सगीष्पतीष्ट्यास्थपतिः सोमपीथीतुसोमपाः ॥ सर्ववेदाः सयेनेष्टोयागः सर्वस्वदक्षिणः ॥११
॥ अनूचानः प्रवचनेसांगेधीतीगुरोस्तुयः ॥ लब्धानुज्ञः समावृत्तः सुत्वात्वभिषवेकृते ॥१२॥ छात्रांतेवासिनौशिष्येशैक्षाः प्राथ

मकल्पिकाः ॥ एकब्रह्मव्रताचारामिथः सब्रह्मचारिणः ॥१३॥ सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित् ॥ पारंपर्योपदेशेस्या
दैतिह्यमितिहाव्ययं ॥१४॥ उपज्ञाज्ञानमाद्यंस्याज्ज्ञात्वारंभउपक्रमः ॥ यज्ञः सवोध्वरोयागः सप्ततंतुर्मखः क्रतुः ॥१५॥ पाठो-
होमश्चातिथीनांसपर्यातर्पणंबलिः ॥ एतेपंचमहायज्ञाब्रह्मयज्ञादिनामकाः ॥१६॥ समज्यापरिषद्गोष्ठीसभासमितिसंसदः
॥ आस्थानीक्लीबमास्थानंस्त्रीनपुंसकयोः सदः ॥१७॥ प्राग्वंशः प्राग्घविर्गेहात्सदस्याविधिदर्शिनः ॥ सभासदः सभास्ताराः
सभ्याः सामाजिकाश्चते ॥१८॥ अध्वर्यूद्गातृहोतारोयजुःसामर्ग्विदः क्रमात् ॥ आग्नीध्राद्याधनैर्वार्याऋत्विजोयाजकाश्चते ॥१९
॥ वेदिः परिष्कृताभूमिः समेस्थंडिलचत्वरे ॥ चषालोयूपकटकः कुंबासुगहनावृतिः ॥२०॥ यूपाग्रंमंतेनिर्मंथ्यदारुणित्वरणि
र्द्वयोः ॥ दक्षिणाग्निर्गार्हपत्याहवनीयौत्रयोग्नयः ॥२१॥ अग्नित्रयमिदंत्रेताप्रणीतः संस्कृतोनलः ॥ समूह्यः परिचाय्योपचा
य्यावग्नौप्रयोगिणः ॥२२॥ योगार्हपत्यादानीयदक्षिणाग्निः प्रणीयते ॥ तस्मिन्नानाय्योथाग्नायीस्वाहाचहुतभुक्प्रिया ॥२३
॥ ऋग्सामिधेनीधाय्याचयास्यादग्निसमिंधने ॥ गायत्रीप्रमुखंछंदोहव्यपाकेचरुः पुमान् ॥२४॥ आ[illegible]क्षासाशृतोष्णेयाक्षीरे
स्याद्दधियोगतः ॥ धवि[illegible]व्यजनंतद्यद्रचितंमृगचर्मणा ॥२५॥ पृषदाज्यंसदध्याज्येपरमान्नंतुपायसं ॥ हव्यकव्येदैवपित्र्ये-
अन्नेपात्रंस्रुवादिकं ॥२६॥ ध्रुवोपभृज्जुहूर्नातुस्रुवोभेदाः स्रुचः स्त्रियः ॥ उपाकृतः पशुरसौयोभिमंत्र्यक्रतौहतः ॥२७॥ परं

पराकंशमनंप्रोक्षणंचवधार्थकं ॥ वाच्यलिंगाः प्रमीतोपसंपन्नप्रोक्षिताहते ॥ २८ ॥ सान्नाय्यं हविरग्नौतु हुतंत्रिषुवषट्कृतं ॥
दीक्षांतोवभृथोयज्ञेतत्कर्मार्हंतुयज्ञियं ॥ २९ ॥ त्रिष्वथक्रतुकर्मेष्टं पूर्तंखातादिकर्मयत् ॥ अमृतंविघसोयज्ञशेषभोजनशेषयोः
॥ ३० ॥ त्यागोविहापितंदानमुत्सर्जनविसर्जने ॥ विश्राणनंवितरणं स्पर्शनंप्रतिपादनं ॥ ३१ ॥ प्रादेशनंनिर्वपणमपवर्जनमंहतिः
॥ मृतार्थंतदहेदानंत्रिषुस्यादौर्ध्वदेहिकं ॥ ३२ ॥ पितृदानंनिवापः स्याच्छ्राद्धंतत्कर्मशास्त्रतः ॥ अन्वाहार्यंमासिकेंशोऽष्टमोऽन्हः
कुतुपोऽस्त्रियां ॥ ३३ ॥ पर्येषणापरीष्टिश्चान्वेषणाचगवेषणा ॥ सनिस्त्वध्येषणायाञ्चाभिशस्तिर्याचनार्थना ॥ ३४ ॥ षट्तुत्रिष्व
र्घ्यमर्घार्थेपाद्यंपादार्थवारिणि ॥ क्रमादातिथ्यातिथेयेअतिथ्यर्थेऽत्रसाधुनि ॥ ३५ ॥ स्युरावेशिकआगंतुरतिथिर्नागृहागते ॥ प्रा
घूर्णिकःप्राघुणिकोऽभ्युत्थानंतुगौरवं ॥ ३६ ॥ पूजानमस्यापचितिः सपर्याचार्हणाःसमाः ॥ वरिवस्यातुशुश्रूषापरिचर्याप्युपा
सनं ॥ ३७ ॥ व्रज्याटाट्यापर्यटनंचर्यात्वीर्यापथेस्थितिः ॥ उपस्पर्शस्त्वाचमनमथमौनमभाषणं ॥ ३८ ॥ आनुपूर्वीस्त्रियांवा
वृत्परिपाटीअनुक्रमः ॥ पर्यायश्चातिपातस्तुस्यात्पर्ययउपात्ययः ॥ ३९ ॥ नियमोव्रतमस्त्रीतच्चोपवासादिपुण्यकं ॥ औपव
स्तंतूपवासोविवेकः पृथगात्मता ॥ ४० ॥ स्याद्ब्रह्मवर्चसंवृत्ताध्ययनर्द्धिरथांजलिः ॥ पाठेब्रह्मांजलिः पाठेविप्रुषोब्रह्मबिंदवः
॥ ४१ ॥ ध्यानयोगासनेब्रह्मासनंकल्पेविधिक्रमौ ॥ मुख्यः स्यात्प्रथमःकल्पोनुकल्पस्तुततोऽधमः ॥ ४२ ॥ संस्कारपूर्वंग्रहणंस्या



दुपाकरणंश्रुतेः ॥ समेतुपादग्रहणमभिवादनमित्युभे ॥ ४३ ॥ भिक्षुःपरिव्राट्कर्मंदीपाराशर्यपिमस्करी ॥ तपस्वीतापसःपारिकां
क्षीवाचंयमोमुनिः ॥ ४४ ॥ तपःक्लेशसहोदांतोवर्णिनोब्रह्मचारिणः ॥ ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतव्रती ॥ ४५ ॥ येनिर्जि
तेंद्रियग्रामायतिनोयतयश्चते ॥ यः स्थंडिलेव्रतवशाच्छेतेस्थंडिलशाय्यसौ ॥ ४६ ॥ स्थांडिलश्चाथविरजस्तमसस्युर्द्वयातिगाः ॥
पवित्रः प्रयतः पूतः पाषंडाः सर्वलिंगिनः ॥ ४७ ॥ पालाशोदंडआषाढोव्रतेरांभस्तुवैणवः ॥ अस्त्रीकमंडलुःकुंडीव्रतिनामासनं
वृषी ॥ ४८ ॥ अजिनंचर्मकृत्तिः स्त्रीभैक्षंभिक्षाकदंबकं ॥ स्वाध्यायः स्याज्जपः सुत्याभिषवः सवनंचसा ॥ ५० ॥ सर्वैनसामप-
ध्वंसिजप्यंत्रिष्वघमर्षणं ॥ दर्शश्चपौर्णमासश्चयागौपक्षांतयोः पृथक् ॥ ५१ ॥ शरीरसाधनापेक्षंनित्यंयत्कर्मतद्यमः ॥ नियमस्तुस
यत्कर्मनित्यमागंतुसाधनं ॥ ५२ ॥ क्षौरंतुभद्राकरणंमुंडनंवपनंत्रिषु ॥ नतिः स्त्रियांनमस्कारः प्रणामश्चनमस्क्रिया ॥ ५३ ॥ उपवी-
तंयज्ञसूत्रंप्रोद्धृतेदक्षिणेकरे ॥ प्राचीनावीतमन्यस्मिन्निवीतंकंठलंबितं ॥ ५४ ॥ अंगुल्यग्रेतीर्थंदैवंस्वल्पांगुल्योर्मूलेकायं ॥ मध्येंगु
ष्ठांगुल्योःपैत्र्यंमूलेत्वंगुष्ठस्यब्राह्मं ॥ ५५ ॥ स्याद्ब्रह्मभूयंब्रह्मत्वंब्रह्मसायुज्यमित्यपि ॥ देवभूयादिकंतद्वत्कृच्छ्रंसांतपनादिकं ॥
५६ ॥ सन्यासवत्यनशनेपुमान्प्रायोथवीरहा ॥ नष्टाग्निः कुहनालोभान्मिथ्येर्यापथकल्पना ॥ ५७ ॥ व्रात्यः संस्कारहीनः स्याद
स्वाध्यायोनिराकृतिः ॥ धर्मध्वजीलिंगवृत्तिरवकीर्णीक्षतव्रतः ॥ ५८ ॥ सुप्तेयस्मिन्नस्तमेतिसुप्तेयस्मिन्नुदेतिच ॥ अंशुमानभि

निर्मुक्ताप्युदितौचयथाक्रमं ॥ ५९॥ परिवेत्तानुजोनूढेज्येष्ठेदारपरिग्रहात् ॥ परिविन्निस्तुतज्ज्यायान्विवाहोपयमौसमौ ॥ ६०॥ त
थापरिणयोद्वाहोपयामाः पाणिपीडनं ॥ व्यवायोग्राम्यधर्मोमैथुनंनिधुवनंरतं ॥ ६१॥ त्रिवर्गोधर्मकामार्थैश्चतुर्वर्गः समोक्षकैः॥
सबलैस्तैश्चतुर्भद्रंजन्याः स्निग्धावरस्यये ॥ ६२॥ ॥ इतिब्रह्मवर्गः ॥ ॥ मूर्धाभिषिक्तोराजन्योबाहुजः क्षत्रियोविराट्
॥ राजा राट्पार्थिवः क्ष्माभृन्नृपभूपमहीक्षितः॥ राजातुप्रणताशेषसामंतः स्यादधीश्वरः ॥ चक्रवर्तीसार्वभौमोनृपोन्योमंडलेश्व
रः॥ २॥ येनेष्टंराजसूयेनमंडलस्येश्वरश्चयः॥ शास्तियश्चाज्ञयाराज्ञः ससम्राडथराजकं॥ ३॥ राजन्यकंचनृपतिक्षत्रियाणां
गणेक्रमात् ॥ मंत्रीधीसचिवोमात्योन्येकर्मसचिवास्ततः॥ ४॥ महामात्राः प्रधानानिपुरोधास्तुपुरोहितः॥ द्रष्टरिव्यवहाराणां-
प्राड्विवाकाक्षदर्शकौ ॥ ५॥ प्रतीहारोद्वारपालद्वास्थद्वास्थितदर्शकाः॥ रक्षिवर्गस्त्वनीकस्थोथाध्यक्षाधिकृतौसमौ ॥ ६॥ स्था-
युकोधिकृतोग्रामेगोपोग्रामेषुभूरिषु ॥ पौरिकः कनकाध्यक्षोरूप्याध्यक्षस्तुनैष्किकः ॥ ७॥ अंतःपुरेत्वधिकृतः स्यादंतर्वंशिको
जनः ॥ सौविदल्लाः कंचुकिनः स्थापत्याः सौविदाश्चते ॥ ८॥ षंढोवर्षवरस्तुल्यौसेवकार्थ्यनुजीविनः॥ विषयानंतरोराजाशत्रु
र्मित्रमतः परं ॥ ९॥ उदासीनः परतरः पार्ष्णिग्राहस्तुपृष्ठतः॥ रिपौवैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः॥ १०॥ द्विड्विपक्षाहितामि
त्रदस्युशात्रवशत्रवः॥ अभिघातिपराराति प्रत्यर्थिपरिपंथिनः॥ ११॥ भ्रातृव्यासहनद्वेषीजिघांसुर्प्रत्यनीकिनः॥ वयस्यःस्नि
ग्धः सवयाअथमित्रंसखासुहृत् ॥ १२॥ सख्यंसाप्तपदीनंस्यादनुरोधोनुवर्तनं ॥ यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः ॥ १३
॥ चारश्चगूढपुरुषश्चाप्तः प्रत्ययितस्त्रिषु ॥ सांवत्सरोज्यौतिषिकोदैवज्ञगणकावपि ॥ १४॥ स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तांति-
काअपि ॥ तांत्रिकोज्ञातसिद्धांतः सत्रीगृहपतिः समौ ॥ १५॥ लिपिकारोक्षरचणोक्षरचुंचुश्चलेखके ॥ लिखिताक्षरविन्यासेलि
पिर्लिबिरुभेस्त्रियौ ॥ १६॥ स्यात्संदेशहरोदूतोदौत्यंतद्भावकर्मणि ॥ अध्वनीनोध्वगोध्वन्यः पांथः पथिकइत्यपि ॥ १७॥ स्वाम्य-
मात्यसुहृत्कोशराष्ट्रदुर्गबलानिच ॥ राज्यांगानिप्रकृतयः पौराणांश्रेणयोपिच ॥ १८॥ संधिर्नाविग्रहोयानमासनंद्वैधमाश्रयः॥ ष
ड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमंत्रजाः ॥ १९॥ क्षयस्थानंचवृद्धिश्चत्रिवर्गोनीतिवेदिनां ॥ सप्रतापः प्रभावश्चयत्तेजः कोश
दंडजं ॥ २०॥ सामदानेभेददंडावित्युपायचतुष्टयं ॥ साहसंतुदमोदंडः सामसांत्वमथोसमौ ॥ २१॥ भेदोपजापावुपधाधर्माद्यै
र्यत्परीक्षणं ॥ पंचत्रिष्वषडक्षीणोयस्तृतीयाद्यगोचरः ॥ २२॥ विविक्तविजनच्छन्ननिःशलाकास्तथारहः॥ रहश्चोपांशुचालिंगे
रहस्यंतद्भवेत्रिषु ॥ २३॥ समौविस्रंभविश्वासौभ्रेषोभ्रंशोयथोचितात् ॥ अभ्रेषन्यायकल्पास्तुदेशरूपंसमंजसं ॥ २४॥ यु
क्तमौपयिकंलभ्यंभजमानाभिनीतवत् ॥ न्याय्यंचत्रिषुषट्संप्रधारणातुसमर्थनं ॥ २५॥ अववादस्तुनिर्देशोनिदेशः शा-
सनंचसः ॥ शिष्टिश्चाज्ञाचसंस्थातुमर्यादाधारणास्थितिः ॥ २६॥ आगोपराधोमंतुश्चसमेतूद्दानबंधने ॥ द्विपाद्योद्विगुणोदं

प॰ मुपहारस्तथोपदा

डोभागधेयः करोबलिः ॥ २७॥ घट्टादिदेयंशुल्कोस्त्रीप्राभृतंतुप्रदेशनं ॥ उपायनमुपग्राह्यमुपहारस्तथोपदा ॥ २८॥ यौतकादितुयद्देयंसुदायोहरणंचतत् ॥ तत्कालस्तुतदात्वंस्यादुत्तरः कालआयतिः ॥ २९॥ सांदृष्टिकंफलंसद्यउदर्कः फलमुत्तरं ॥ अदृष्टंवन्हितोयादिदृष्टंस्वपरचक्रजं ॥ ३०॥ महीभुजामहिभयंस्वपक्षप्रभवंभयं ॥ प्रक्रियात्वधिकारः स्याच्चामरंतुप्रकीर्णकं ॥ ३१॥ नृपासनंयत्तद्भद्रासनंसिंहासनंचतत् ॥ हैमंछत्रंत्वातपत्रंराज्ञस्तुनृपलक्ष्मतत् ॥ ३२॥ भद्रकुंभः पूर्णकुंभोभृंगारः कनकालुका ॥ निवेशः शिबिरंषंढेसज्जनंतूपरक्षणं ॥ ३३॥ हस्त्यश्वरथपादातंसेनांगंस्याच्चतुष्टयं ॥ दंतीदंतावलोहस्तीद्विरदोनेकपोद्विपः ॥ ३४॥ मतंगजोगजोनागः कुंजरोवारणः करी ॥ इभः स्तंबेरमः पद्मीयूथनाथस्तुयूथपः ॥ ३५॥ मदोत्कटोमदकलः कलभः करिशावकः ॥ प्रभिन्नोगर्जितोमत्तः समावुद्वांतनिर्मदौ ॥ ३६॥ हास्तिकंगजतावृंदेकरिणीधेनुकावशा ॥ गंडः कटोमदोदानंवमथुः करशीकरः ॥ ३७॥ कुंभौतुपिंडौशिरसस्तयोर्मध्येविंदुः पुमान् ॥ अवग्रहोललाटंस्यादीषिकात्वक्षिकूटकं ॥ ३८॥ अपांगदेशोनिर्याणंकर्णमूलंतुचूलिका ॥ अधः कुंभस्यवाहित्थंप्रतिमानमधोस्ययत् ॥ ३९॥ आसनंस्कंधदेशः स्यात्पद्मकंबिंदुजालकं ॥ पक्षभागः पार्श्वभागोदंतभागस्तुयोग्रतः ॥ ४०॥ द्वौपूर्वपश्चाज्जंघादिदेशौगात्रावरेक्रमात् ॥ तोत्रंवेणुकमालानंबंधस्तंभेथशृंखले ॥ ४१॥ अंदुकोनिगडोस्त्रीस्यादंकुशोस्त्रीसृणिः स्त्रियां ॥ दूष्याकक्ष्यावरत्रास्यात्कल्पनासज्जनासमे ॥ ४२॥ प्रवेण्यास्तरणंवर्णः परि





स्तोमः कुथोद्वयोः ॥ वीतंत्वसारंहस्त्यश्वंवारीतुगजबंधिनी ॥ ४३॥ घोटकेपीतितुरगतुरंगाश्वतुरंगमाः ॥ वाजिवाहार्वगंधर्वहयसैंधवसप्तयः ॥ ४४॥ आजानेयाः कुलीनास्युर्विनीताः साधुवाहिनः ॥ वनायुजाः पारसीकाः कांबोजाबाल्हिकाहयाः ॥ ४५॥ ययुरश्वोश्वमेधीयोजवनस्तुजवाधिकः ॥ पृष्ठ्यस्थौरीसितः कर्कोरथ्योवोढारथस्ययः ॥ ४६॥ बालः किशोरोवाम्यश्वावडवावाडवंगणे ॥ त्रिष्वाश्वीनंयदश्वेनदिनेनैकेनगम्यते ॥ ४७॥ कश्यंतुमध्यमश्वानांहेषाह्रेषाचनिः स्वनः ॥ निगालस्तुगलोद्देशोवृंदेत्वश्वीयमाश्ववत् ॥ ४८॥ आस्कंदितंधौरितकंरेचितंवल्गितंप्लुतं ॥ गतयोमूः पंचधाराघोणातुप्रोथमस्त्रियां ॥ ४९॥ कविकातुखलीनोस्त्रीशफंक्लीबेखुरः पुमान् ॥ पुच्छोस्त्रीलूमलांगूलेवालहस्तश्चवालधिः ॥ ५०॥ त्रिषूपावृत्तलुठितौपरावृत्तेमुहुर्भुवि ॥ यानेचक्रिणियुद्धार्थेशतांगः स्यंदनोरथः ॥ ५१॥ असौपुष्परथश्चक्रयानंनसमराययत् ॥ कर्णीरथः प्रवहणंडयनंचसमंत्रयं ॥ ५२॥ क्लीबेनः शकटोस्त्रीस्याद्गंत्रीकंबलवात्यकं ॥ शिबिकायाप्ययानंस्याद्दोलाप्रेंखादिकास्त्रियां ॥ ५३॥ उभौतुद्वैपवैयाघ्रौद्वीपिचर्मावृतेरथे ॥ पांडुकंबलसंवीतः स्यंदनः पांडुकंबली ॥ ५४॥ रथेकांबलवास्त्राद्याः कंबलादिभिरावृते ॥ त्रिषुद्वैपादयोरथ्यारथकट्यारथव्रजे ॥ ५५॥ धूः स्त्रीक्लीबेयानमुखंस्याद्रथांगमपस्करः ॥ चक्रंरथांगंतस्यांतेनेमिः स्त्रीस्यात्प्रधिः पुमान् ॥ ५६॥ पिंडिकानाभिरक्षाग्रकीलकेतुद्वयोरणिः ॥ रथगुप्तिर्वरूथोनाकूबरस्तुयुगंधरः ॥ ५७॥ अनुकर्षोदार्वधस्थंप्रासंगोनायुगायुगः ॥ सर्वस्याद्वाहनंयानंयुग्यंपत्रंचधोरणं ॥ ५८॥ प

अ॰को॰
२९

रंपरावाहनंयत्तद्वैनीतकमस्त्रियां ॥ आधोरणाहस्तिपकाहस्त्यारोहानिषादिनः ॥५९॥ नियंता प्राजितायंतासूतः क्षत्ताचसारथिः
॥ सव्येष्टदक्षिणस्थौचसंज्ञारथकुटुंबिनः ॥६०॥ रथिनः स्यंदनारोहा अश्वारोहास्तुसादिनः ॥ बलिनोयेसहस्त्रेणसाहस्त्रास्ते
सहस्त्रिणः ॥६१॥ परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ॥ भटायोधाश्चयोद्धारः सेनारक्षास्तुसैनिकाः ॥६२॥ सेनायांसमवेता-
येसैन्यास्तेसैनिकाश्चते ॥ कंचुकोवारवाणोस्त्रीयत्तुमध्येसकंचुकाः ॥६३॥ बध्नंतितत्सारसनमधिकांगोथशीर्षकं ॥ शीर्ष
ण्यंचशिरस्त्रेथतनुत्रंवर्मदंशनं ॥६४॥ उरश्छदः कंकटकोऽजगरः कवचोस्त्रियां ॥ आमुक्तः प्रतिमुक्तश्चपिनद्धश्चापिनद्धवत् ६५
सन्नद्धोवर्मितः सज्जोदंशितोव्यूढकंकटः ॥ त्रिष्वामुक्तादयोवर्मभृतांकावचिकंगणे ॥६६॥ पदातिपत्तिपदगपादातिकपदाज-
यः ॥ पद्गश्चपदिकश्चाथपादातंपत्तिसंहतिः ॥६७॥ शस्त्राजीवेकांडपृष्ठायुधीयायुधिकाः समाः ॥ कृतहस्तः सुप्रयोगविशिखः कृ
तपुंखवत् ॥६८॥ अपराद्धपृषत्कोसौलक्ष्याद्यश्च्युतसायकः ॥ धन्वीधनुष्मान्धानुष्कोनिषंग्यस्त्रीधनुर्धरः ॥६९॥ स्यात्कांडवांस्तु-
कांडीरः शाक्तिकः शक्तिहेतिकः ॥ याष्टीकपारश्वधिकौयष्टिस्वधितिहेतिकौ ॥७०॥ नैस्त्रिंशिकोऽसिहेतिः स्यात्समौप्रासिककौंति
कौ ॥ चर्मीफलकपाणिः स्यात्पताकीवैजयंतिकः ॥७१॥ अनुप्लवः सहायश्चानुचरोभिचरः समाः ॥ पुरोगाग्रेसरप्रष्ठाग्रतः सरपुरः
सराः ॥७२॥ पुरोगमः पुरोगामीमंदगामीतुमंथरः ॥ जंघालोतिजवस्तुल्यौजंघाकरिकजांघिकौ ॥७३॥ तरस्वीत्वरितोवेगीप्रजवीज

वनोजवः ॥ जय्योयः शक्यतेजेतुंजेयोजेतव्यमात्रके ॥७४॥ जैत्रस्तुजेतायोगच्छत्यलंविद्विषतः प्रति ॥ सोभ्यमित्रोभ्यमित्रीयोप्य
भ्यमित्रीणइत्यपि ७५ ऊर्जस्वलः स्यादूर्जस्वीयऊर्जातिशयान्वितः ॥ स्यादुरस्वानुरसिलोरथिनोरथिकोरथी ॥७६॥ कामंगाम्यनुका
मीनोत्यत्यंतीनस्तथाभृशं ॥ शूरोवीरश्चविक्रांतोजेताजिष्णुश्चजित्वरः ॥७७॥ सांयुगीनोरणेसाधुः शस्त्राजीवादयस्त्रिषु ॥ ध्वजि-
नीवाहिनीसेनापृतनानीकिनीचमूः ॥७८॥ वरूथिनीबलंसैन्यंचक्रंचानीकमस्त्रियां ॥ व्यूहस्तुबलविन्यासोभेदादंडादयोयुधि ॥७९
॥ प्रत्यासारोव्यूहपार्ष्णिः सैन्यपृष्ठेप्रतिग्रहः ॥ एकेभैकरथात्र्यश्वापत्तिः पंचपदातिका ॥८०॥ पत्यंगैस्त्रिगुणैः सर्वैः क्रमादाख्यायथो
त्तरं ॥ सेनामुखंगुल्मगणौपृतनावाहिनीचमूः ॥८१॥ अनीकिनीदशानीकिण्यक्षौहिण्यथसंपदि ॥ संपत्तिः श्रीश्चलक्ष्मीश्चवि
पत्त्यांविपदापदौ ८२ आयुधंतुप्रहरणंशस्त्रमस्त्रमथास्त्रियौ ॥ धनुश्चापौधन्वशरासनकोदंडकार्मुकं ॥८३॥ इष्वासोप्यथकर्ण
स्यकालपृष्ठंशरासनं ॥ कपिध्वजस्यगांडीवगांडीवौपुन्नपुंसकौ ॥८४॥ कोटिरस्याटनीगोधेतलेज्याघातवारणे ॥ लस्तकस्तुध-
नुर्मध्यंमौर्वीज्यासिंजिनीगुणः ॥८५॥ स्यात्प्रत्यालीढमालीढमित्यादिस्थानपंचकं ॥ लक्षंलक्ष्यंशरव्यंचशराभ्यासउपासनं ॥८६
पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ कलंबमार्गणशराः पत्रीरोपइषुर्द्वयोः ॥८७॥ प्रक्ष्वेडनास्तुनाराचाः पक्षोवाजस्त्रिषू
त्तरे ॥ निरस्तः प्रहितेबाणेविषाक्तेदिग्धलिप्तकौ ॥८८॥ तूणोपासंगतूणीरनिषंगाइषुधिर्द्वयोः ॥ तूण्यांखड्गेतुनिस्त्रिंशचंद्रहा

का॰
२
द
पत्रेषु
२९
ग्रा
जि
ष्णु

सासिरिष्टयः ॥८९॥ कौक्षेयकोमंडलाग्रः करवालः कृपाणवत् ॥ त्सरुः खड्गादिमुष्टौस्यान्मेखलातन्निबंधनं ॥९०॥ फलकोस्त्री-
फलंचर्मसंग्राहोमुष्टिरस्ययः ॥ द्रुघणोमुद्गरघनौस्यादीलीकरवालिका ॥ ९१॥ भिंदिपालसृगस्तुल्यौपरिघः परिघातनः ॥ द्वयोः
कुठारः स्वधितिः परशुश्चपरश्वधः ॥९२॥ स्याच्छस्त्रीचासिपुत्रीचछुरिकाचासिधेनुका ॥ वापुंसिशल्यंशंकुर्नाशर्वलातोमरोस्त्रि
यां ॥९३॥ प्रासस्तुकुंतः कोणस्तुस्त्रियः पाल्यश्रिकोटयः ॥ सर्वाभिसारः सर्वौघः सर्वसन्नहनार्थकः ॥९४॥ लोहाभिसारोस्त्र
भृतांराज्ञांनीराजनाविधिः ॥ यत्सेनयाभिगमनमरौतदभिषेणनं ॥९५॥ यात्राव्रज्याभिनिर्याणंप्रस्थानंगमनंगमः ॥ स्यादा
सारः प्रसरणंप्रचक्रंचलितार्थकं ॥९६॥ अहितान्प्रत्यभीतस्यरणेयानमभिक्रमः ॥ वैतालिकाबोधकराश्चाक्रिकाघांटिका
श्चते ॥९७॥ स्युर्मागधास्तुमगधाबंदिनस्तुतिपाठकाः ॥ संशप्तकास्तुसमयात्संग्रामादनिवर्तिनः ॥९८॥ रेणुर्द्वयोः स्त्रियांधूलिः
पांसुर्नानद्वयोरजः ॥ चूर्णेक्षोदः समुत्पिंजपिंजलौभृशमाकुले ॥ ९९॥ पताकावैजयंतीस्यात्केतनंध्वजमस्त्रियां ॥ सावीराशंस
नंयुद्धभूमिर्यातिभयप्रदा ॥१००॥ अहंपूर्वमहंपूर्वमित्यहंपूर्विकास्त्रियां ॥ अहोपुरुषिकादर्पाद्यास्यात्संभावनात्मनि ॥१॥ अ
हमहमिकातुसास्यात्सरस्परंयोभवत्यहंकारः ॥ द्रविणंतरः सहोबलशौर्याणिस्थामशुष्मंच ॥२॥ शक्तिः पराक्रमः प्राणोवि
क्रमस्त्वतिशक्तिता ॥ वीरपानंतुयत्पानंवृत्तेभाविनिवारणे ॥ ३॥ युद्धमायोधनंजन्यंप्रधनंप्रविदारणं ॥ मृधमास्कंदनंसंख्यंस

मीकंसांपरायिकं ॥४॥ अस्त्रियांसमरानीकरणाः कलहविग्रहौ ॥ संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः ॥५॥ अभ्यामर्दसमा-
घातसंग्रामाभ्यागमाहवाः ॥ समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः ॥ ६॥ नियुद्धंबाहुयुद्धेस्यात्तुमुलंरणसंकुले ॥ क्ष्वेडातु
सिंहनादः स्यात्करिणांघटनाघटा ॥ ७॥ क्रंदनंयोधसंरावोबृंहितंकरिगर्जितं ॥ विस्फारोधनुषः स्वानः पटहाडंबरौसमौ ॥८॥ प्रसभं
तुबलात्कारोहठोथस्खलितंछलं ॥ अजन्यंक्लीबमुत्पातउपसर्गः समंत्रयं ॥ ९॥ मूर्च्छातुकश्मलंमोहोप्यवमर्दस्तुपीडनं ॥ अभ्य
वस्कंदनंत्वभ्यासादनंविजयोजयः ॥१०॥ वैरशुद्धिः प्रतीकारोवैरनिर्यातनंचसा ॥ प्रद्रावोद्द्रावसंद्रावसंदावाविद्रवोद्रवः ॥१११॥
अपक्रमोपयानंचरणेभंगः पराजयः ॥ पराजितपराभूतौत्रिषुनष्टतिरोहितौ ॥ १२॥ प्रमापणंनिबर्हणंनिकारणंविशारणं ॥ प्रवा
सनंपरासनंनिर्हिंसनंनिषूदनं ॥१३॥ निर्वासनंसंज्ञपनंनिर्ग्रंथनमपासनं ॥ निस्तर्हणंनिहननंक्षणनंपरिवर्जनं ॥ १४ ॥ निर्वापणं
विशासनंमारणंप्रतिघातनं ॥ उद्वासनप्रमथनक्रथनोज्जासनानिच ॥ १५॥ आलंभपिंजविशरघातोन्मथवधाअपि ॥ स्या
त्पंचताकालधर्मोदिष्टांतः प्रलयोत्ययः ॥१६॥ अंतोनाशोद्वयोर्मृत्युर्मरणंनिधनोस्त्रियां ॥ परासुप्राप्तपंचत्वपरेतप्रेतसंस्थिताः
॥१७॥ मृतप्रमीतौत्रिष्वेतेचिताचित्याचितिः स्त्रियां ॥ कबंधोस्त्रीक्रियायुक्तमपमूर्धकलेवरं ॥१८॥ श्मशानंस्यात्पितृवनंकु
णपः शवमस्त्रियां ॥ प्रग्रहोपग्रहौबंद्यांकारास्याद्बंधनालये ॥ १९॥ पुंसिभूम्न्यसवः प्राणाश्चैवंजीवोसुधारणं ॥ आयुर्जीवित्त

स्म

कालोनाजीवातुर्जीवनौषधं ॥२०॥ ॥ इतिक्षत्रियवर्गः ॥ ॥ ऊरव्याऊरुजाअर्यावैश्याभूमिस्पृशोविशः ॥ आ
जीवोजीविकावार्तावृत्तिर्वर्तनजीवने ॥१॥ स्त्रियांकृषिः पाशुपाल्यंवाणिज्यंचेतिवृत्तयः ॥ सेवाश्ववृत्तिरनृतंकृषिरुंछशिलं
त्वृतं ॥२॥ द्वेयाचितायाचितयोर्यथासंख्यंमृतामृते ॥ सत्यानृतंवणिग्भावः स्यादृणंपर्युदंचनं ॥ ३ ॥ उद्धारोर्थप्रयोगस्तुकुसीदंवृ-
द्धिजीविका ॥ याञ्चयाप्तंयाचितकंनिमयादापमित्यकं ॥ ४ ॥ उत्तमर्णाधमर्णौ द्वौप्रयोक्तृग्राहकौक्रमात् ॥ कुसीदिकोवार्धुषिको
वृद्ध्याजीवश्चवार्धुषिः ॥ ५ ॥ क्षेत्राजीवः कर्षकश्चकृषिकश्चकृषीवलः ॥ क्षेत्रंव्रैहेयंशालेयंव्रीहिशाल्युद्भवोचितं ॥ ६ ॥ यव्यंयव
क्यंषष्टिक्यंयवादिभवनंहियत् ॥ तिल्यंतैलीनवन्माषोमाणुभंगाद्विरूपता ॥ ७ ॥ मौद्गीनकौद्रवीणादिशेषधान्योद्भवक्षमं ॥ "शा
कक्षेत्रादिकेशाकशाकटंशाकशाकिनं ॥९" बीजाकृतंतूप्तकृष्टंसीत्यंकृष्टंचहल्यवत् ॥ ८ ॥ त्रिगुणाकृतंतृतीयाकृतंत्रिहल्यंत्रिसी-
त्यमपितस्मिन् ॥ द्विगुणाकृतेतुसर्वंपूर्वंशंबाकृतमपीह ॥ ९ ॥ द्रोणाढकादिवापादौद्रौणिकाढकिकादयः ॥ खारीवापस्तुखारीकउ
त्तमर्णादयस्त्रिषु ॥ १० ॥ पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्यतु ॥ कैदारकंस्यात्कैदार्यंक्षैत्रंकैदारिकंगणे ॥ ११ ॥ लोष्टानिलेष्टवः पुंसिको
टिशोलोष्टभेदनः ॥ प्राजनंतोदनंतोत्रंखनित्रमवदारणं ॥ १२ ॥ दात्रंलवित्रमाबंधोयौक्त्रंयोक्त्रमथोफलं ॥ निरीषंकुटकंफालः कृषि-
कोलांगलंहलं ॥ १३ ॥ गोदारणंचसीरोथशम्यास्त्रीयुगकीलकः ॥ ईषालांगलदंडः स्यात्सीतालांगलपद्धतिः ॥ १४ ॥ पुंसिमेधिः ख

त्रं

लेद्दारुन्यस्तंयत्पशुबंधने ॥ आशुर्व्रीहिः पाटलः स्याच्छितशूकयवौसमौ ॥ १५ ॥ तोक्मस्तुतत्रहरितेकलायस्तुसतीनकः ॥ हरे
णुरेणुकौचास्मिन्कोरदूषस्तुकोद्रवः ॥ १६ ॥ मंगल्यकोमसूरोथमकुष्टकमयुष्टकौ ॥ वनमुद्गेसर्षपेतुद्वौतंतुभकदंबकौ ॥ १७ ॥ सिद्धा-
र्थस्त्वेषधवलोगोधूमः सुमनः समौ ॥ स्याद्यावकस्तुकुल्माषश्चणकोहरिमंथकः ॥ १८ ॥ द्वौतिलेतिलपेजश्चतिलपिंजश्चनिष्फले ॥ क्षवः
क्षुधाभिजननोराजिकाकृष्णिकासुरी ॥ १९ ॥ स्त्रियौकंगुप्रियंगूद्वेअतसीस्यादुमाक्षुमा ॥ मातुलानीतुभंगायांव्रीहिभेदस्त्व
णुः पुमान् ॥ २० ॥ किंशारुः सस्यशूकंस्यात्कणिशंसस्यमंजरी ॥ धान्यंव्रीहिः स्तंबकरिः स्तंबोगुच्छस्तृणादिनः ॥ २१ ॥ नाडीनालं
चकांडोस्यपलालोस्त्रीसनिष्फलः ॥ कडंगरोबुसंक्लीबेधान्यत्वचिपुमांस्तुषः ॥ २२ ॥ शूकोस्त्रीश्लक्ष्णतीक्ष्णाग्रेशमीशिंबात्रिषूत्त
रे ॥ ऋद्धमावसितंधान्यंपूतंतुबहुलीकृतं ॥ २३ ॥ माषादयः शमीधान्येशूकधान्येयवादयः ॥ शालयः कलमाद्याश्चषष्टिकाद्याश्च
पुंस्यमी ॥ २४ ॥ तृणधान्यानिनीवाराः स्त्रीगवेधुर्गवेधुका ॥ अयोग्रंमुसलोस्त्रीस्यादुदूखलमुलूखलं ॥ २५ ॥ प्रस्फोटनंशूर्पमस्त्री
चालनीतितउः पुमान् ॥ स्यूतप्रसेवौकंडोलपिटौकटकिलिंजकौ ॥ २६ ॥ समानौरसवत्यांतुपाकस्थानमहानसे ॥ पौरोगवस्तद
ध्यक्षः सूपकारास्तुबल्लवाः ॥ २७ ॥ आरालिकाआंधसिकाः सूदाऔदनिकागुणाः ॥ आपूपिकः कांदविकोभक्ष्यकारइमेत्रिषु ॥
२८ ॥ अश्मंतमुद्धानमधिश्रयणीचुल्लिरंतिका ॥ अंगारधानिकांगारशकट्यपिहसंत्यपि ॥ २९ ॥ हसन्त्यप्यथनस्त्रीस्यादंगारोला

तमुल्मुकं॥ क्लीबेंबरीषंभ्राष्ट्रोनाकंदुर्वास्वेदनीस्त्रियां॥३०॥ अलिंजरः स्यान्मणिकः कर्कर्यालुर्गलंतिका॥ पिठरः स्थाल्युखा कुंडं कलशस्तुत्रिषुद्वयोः॥३१॥ घटः कुटनिपावस्त्रीशरावोवर्धमानकः॥ ऋजीषं पिष्टपचनंकंसोस्त्रीपानभाजनं॥३२॥ कुतूः कृत्तेःस्नेहपात्रं सैवाल्पाकुतुपः पुमान्॥ सर्वमावपनंभांडंपात्रामत्रंचभाजनं॥३३॥ दर्विः कंबिः खजाकाचस्यात्तर्दूर्दारुहस्तकः॥अस्त्री शाकंहरितकंशिग्रुरस्यतुनालिका॥३४॥ कलंबश्चकडंबश्चवेसवारउपस्करः॥तिंतिडीकंचचुक्रंचवृक्षाम्लमथवेल्लजं॥३५॥मरीचंकोलकंकृष्णमूषणंधर्मपत्तनं॥जीरकोजरणोजाजीकणाकृष्णेतुजीरके॥३६॥ सुषवीकारवीपृथ्वीपृथुः कालोपकुंचिका॥ आर्द्रकंशृंगवेरंस्यादथछत्रावितुन्नकं॥३७॥ कुस्तुंबुरुचधान्याकमथशुंठीमहौषधं॥स्त्रीनपुंसकयोर्विश्वंनागरंविश्वभेषजं॥३८॥ आरनालकसौवीरकुल्माषाभिषुतानिच॥ अवंतिसोमधान्याम्लकुंजलानिचकांजिके॥३९॥सहस्रवेधिजतुकं बाल्हीकंहिंगुरामठं॥ तत्पत्रीकारवीपृथ्वीबाष्पिकाकबरीपृथुः॥४०॥ निशाख्याकांचनीपीताहरिद्रावरवर्णिनी॥ सामुद्रंयत्तुलवणमक्षीवंवशिरंचतत्॥४१॥ सैंधवोस्त्रीशीतशिवंमाणिमंथंचसिंधुजे॥ रौमकंवसुकंपाक्यंबिडंचकृतकेद्वयं॥४२॥ सौवर्चलेक्षरुचकेतिलकंतत्रमेचके॥ मत्स्यंडीफाणितंखंडविकारः शर्करासिता॥४३॥ कूर्चिकाक्षीरविकृतिः स्याद्रसालातुमार्जिता॥ स्यात्तेमनंतुनिष्ठानंत्रिलिंगवासितावधेः॥४४॥ शूलाकृतंभटित्रंस्याच्छूल्यमुख्यंतुपैठरं॥ प्रणीतमुपसंपन्नंप्रयस्तं



स्यात्सुसंस्कृतं॥४५॥ स्यात्पिच्छिलंतुविजिलंसंमृष्टंशोधितंसमे॥ चिक्कणंमसृणंस्निग्धंतुल्येभावितवासिते॥४६॥ आपक्वंपौलिरभ्यूषोलाजाः पुंभूम्निचाक्षताः॥ पृथुकः स्याच्चिपिटकोधानाभ्रष्टयवेस्त्रियः॥४७॥ पूपोपूपः पिष्टकः स्यात्करंभोदधिसक्तवः॥ भिः-स्सास्त्रीभक्तमंधोन्नमोदनंस्त्रीसदीदिविः॥४८॥ भिःसटादग्धिकासर्वरसाग्रेमंडमस्त्रियां॥ मासराचामनिःस्रावामंडेभक्तसमुद्भवे॥४९॥ यवागूरुष्णिकाश्राणाविलेपीतरलाचसा॥ गव्यंत्रिषुगवांसर्वंगोविड्गोमयमस्त्रियां॥५०॥ तत्तुशुष्कंकरीषोऽस्त्रीदुग्धंक्षीरंपयःसमं॥ पयस्यमाज्यदध्यादिद्रप्संदधिघनेतरत्॥५१॥ घृतमाज्यंहविः सर्पिर्नवनीतंनवोद्धृतं॥ तत्तुहैयंगवीनंयत्त्योगोदोहोद्भवंघृतं॥५२॥ दंडाहतंकालशेयमरिष्टमपिगोरसः॥ तक्रंत्युदश्विन्मथितंपादाम्ब्वर्धांबुनिर्जलं॥५३॥ मंडंदधिभवंमस्तुपीयूषोभिनवंपयः॥ अशनायाबुभुक्षाक्षुद्ग्रासस्तुकवलः पुमान्॥५४॥ सपीतिः स्त्रीतुल्यमानं सग्धिः स्त्रीसहभोजनं॥ उदन्यातुपिपासातृट्‌तर्षोजग्धिस्तुभोजनं॥५५॥ जेमनंलेहआहारोनिघसोन्यादइत्यपि॥ सौहित्यंतर्पणंतृप्तिःफेलाभुक्तसमुज्झितं॥५६॥ कामंप्रकामंपर्याप्तंनिकामेष्टंयथेप्सितं॥ गोपेगोपालगोसंख्यगोधुगाभीरबल्लवाः॥५७॥ गोमहिष्यादिकंपादबंधनंद्वौगवीश्वरे॥ गोमान्गोमीगोकुलंतुगोधनंस्याद्गवांव्रजे॥५८॥ त्रिष्वाशितंगवीनंतद्गावोयत्राशिताःपुरा॥ उक्षाभद्रोबलीवर्दऋषभोवृषभोवृषः॥५९॥ अनड्वान्सौरभेयोगौरुक्ष्णांसंहतिरौक्षकं॥ गव्यागोत्रागवांवत्सधेन्वोर्वात्सकधेनुके॥६०॥ वृषोमहान्महोक्षःस्याद्वृद्धोक्षस्तुजरद्गवः॥

अ॰को॰
३२

कां॰
२
रा:

उत्सन्न उक्षा जातोक्षः सद्योजातस्तु तर्णकः ॥ ६१॥ शकृत्करिस्तु वत्सः स्याद्दम्यवत्सतरौ समौ ॥ आर्षभ्यः षंडतायोग्यः षंडोगोपतिरि
ट्चरः ॥ ६२॥ स्कंधदेशेत्वस्यवहः सास्नातु गलकंबलः ॥ स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड्युगपार्श्वगः ॥ ६३॥ युगादीनांतु वोढारो युग्य
प्रासंग्यशाकटाः ॥ खनेंनितेनेनत द्धोढास्येदं हालिक सैरिकौ ॥ ६४॥ धूर्वहे धुर्यधौरेयधुरीणाः सधुरं[illegible]ः ॥ उभावेकधुरीणेकधुरावेकधुरा
वहे ॥ ६५॥ सतु सर्वधुरीणः स्याद्योवै सर्वधुरावहः ॥ माहेयी सौरभेयी गौरुस्रा माता च शृंगिणी ॥ ६६॥ अर्जुन्यघ्न्यारोहिणी स्यादुत्तमा
गोषु नैचिकी ॥ वर्णादिभेदात्संज्ञाः स्युः शबलीधवलादयः ॥ ६७ ॥ द्विहायनी द्विवर्षा गौरेकाब्दात्वेकहायनी ॥ चतुरब्दा चतुर्हायण्ये
वंत्र्यब्दा त्रिहायणी ॥ ६८ ॥ वशा वंध्यावतोकातु स्रवद्गर्भाथ संधिनी ॥ आक्रांतावृषभेणाथ वेहद्गर्भोपघातिनी ॥ ६९॥ काल्योप
सर्या प्रजने प्रष्ठौही बालगर्भिणी ॥ स्यादचंडीतु सुकरा बहुसूतिः परेष्टुका ॥ ७०॥ चिरसूता बष्कयणी धेनुः स्यान्नवसूतिका ॥
सुव्रता सुखसंदोह्या पीनोघ्नी पीवरस्तनी ॥ ७१॥ द्रोणक्षीरा द्रोणदुग्धा धेनुष्याबंधके स्थिता ॥ समांसमीना सा यैव प्रतिवर्षं प्रसू
यते ॥ ७२॥ ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ ॥ नपुंसि दाम संदानं पशुरज्जुस्तु दामिनी ॥ ७३॥ वैशाखमंथमंथानमंथानो
मंथदंडके ॥ कुठरो दंडविष्कंभो मंथनी गर्गरी समे ७४ उष्ट्रे क्रमेलकमयमहांगाः करभः शिशुः ॥ करभाः स्युः शृंखलका दारवैः पादबंध
नैः ॥ ७५॥ अजाच्छागी [illegible] बच्छागबस्तच्छगलका अजे ॥ मेंढ्रोरभ्रोरणोर्णायु मेषवृ[illegible] एडके ॥ ७६॥ उष्ट्रोरभ्राज वृंदे स्यादौष्ट्र

रा

३२

कौरभ्रकाजकं ॥ चक्रीवंतस्तु बालेया रासभा गर्दभाः खराः ॥ ७७ ॥ वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ॥ पण्याजीवो ह्यापणि
कः क्रयविक्रयिकश्च सः ॥ ७८॥ विक्रेता स्याद्विक्रयिकः क्रायिकक्रयिकौ समौ ॥ वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोप्यवक्रियः
॥ ७९॥ नीवी परि[illegible] मूलधनं लाभोधिकं फलं ॥ परिदानं परीवर्तो नैमेय निमयावपि ॥ ८०॥ पुमानुपनिधिर्न्यासः प्रतिदानं तदर्प-
णं ॥ क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥ ८१॥ विक्रेयं पणितव्यं च पण्यं क्रय्यादयस्त्रिषु ॥ क्लीबे सत्यापनं सत्यंकारः सत्याकृतिः
स्त्रियां ॥ ८२॥ विपणो विक्रयः संख्याः संख्येये त्वादश त्रिषु ॥ विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः ॥ ८३॥ संख्यार्थे द्वि
बहुत्वे स्तस्तासु चानवतेः स्त्रियः ॥ पंक्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरं ॥ ८४॥ यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयं ॥ मानं तु
लांगुलिप्रस्थैर्गुंजाः पंचाद्यमाषकः ॥ ८५॥ ते षोडशाक्षः कर्षोस्त्री पलं कर्षचतुष्टयं ॥ सुवर्णबिस्तौ हेम्नोक्षे कुरुबिस्तस्तु तत्फले
॥ ८६॥ तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः ॥ आचितो दश भाराः स्युः शाकटो भार आचितः ॥ ८७॥ कार्षापणः कार्षिकः
स्यात्कार्षिके ताम्रिके पणः ॥ अस्त्रियामाढकद्रोणौ खारी वाहो निकुंचकः ॥ ८८॥ कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक् ॥ पा
दस्तुरीयो भागः स्यादंशभागौ तु वंटके ॥ ८९॥ द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु ॥ हिरण्यं द्रविणं द्युम्नमर्थरैविभवा अपि ॥ ९०
॥ स्यात्कोशश्च हिरण्यं च हेमरूप्ये कृताकृते ॥ ताभ्यां यदन्यत्तत्कुप्यं रूप्यं तद्द्वयमाहतं ॥ ९१॥ गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः

पणे

शोणरत्नंलोहितकंपद्मरागोथमौक्तिकं॥ ९२॥ मुक्ताथविद्रुमः पुंसिप्रवालंपुन्नपुंसकं॥(सूर्यकांतस्त्वग्निमणिर्वैदूर्यंवलवायजं)॥
९३॥ रत्नंमणिर्द्वयोरश्मजातौमुक्तादिकेपिच॥ स्वर्णंसुवर्णंकनकंहिरण्यंहेमहाटकं॥ ९४॥ तपनीयंशातकौंभंगांगेयंभर्मकर्बु
रं॥ चामीकरंजातरूपंमहारजतकांचने॥ ९५॥ रुक्मंकार्तस्वरंजांबूनदमष्टापदोस्त्रियां॥ अलंकारसुवर्णंयच्छृंगीकनकमित्य
दः॥ ९६॥ दुर्वर्णंरजतंरूप्यंखर्जूरंश्वेतमित्यपि॥ रीतिःस्त्रियामारकूटोनस्त्रियामथताम्रकं॥ ९७॥ शुल्बंम्लेच्छमुखंद्व्यष्टवरिष्टोदुंब
राणिच॥ लोहोस्त्रीशस्त्रकंतीक्ष्णंपिंडंकालायसायसी॥ ९८॥ अश्मसारोथमंडूरंसिंघाणमपितन्मले॥ सर्वंचतैजसंलोहंवि
कारस्त्वयशःकुशी॥ ९९॥ क्षारःकाचोथचपलोरसःसूतश्चपारदे॥ गवलंमाहिषंशृंगमभ्रकंगिरिजामले॥ १००॥ स्रोतोंजनंतु
सौवीरंकापोतांजनयामुने॥ तुत्थांजनंशिखिग्रीवंवितुन्नकमयूरकं॥ १॥ कर्परीदार्विकाक्काथोद्भवंतुत्थंरसांजनं॥ रसगर्भंतार्क्ष्य
शैलंगंधाश्मनितुगंधकः॥ सौगंधिकश्चचक्षुष्याकुलाल्यौतुकुलत्थिका॥ २॥ रीतिःपुष्पंपुष्पकेतुपौष्पकंकुसुमांजनं॥ पिंजरंपीत
नंतालमालंचहरितालके॥ ३॥ गैरेयमर्थ्यंगिरिजमश्मजंतुशिलाजतु॥ बोलगंधरसप्राणपिंडगोपरसाःसमाः॥ ४॥ डिंडीरोब्धि
कफःफेनःसिंदूरंनागसंभवं॥ नागसीसकयोगेष्टवप्राणित्रपुपिच्चटं॥ ५॥ रंगवंगेप्यथपिचुस्तूलोथकमलोत्तरं॥ स्यात्कुसुंभंवन्हि-
शिखंमहारजनमित्यपि॥ ६॥ मेषकंबलऊर्णायुःशशोर्णंशशलोमनि॥ मधुक्षौद्रंमाक्षिकादिमधूच्छिष्टंतुसिक्थकं॥ ७॥ मनःशि-

लामनोगुप्तामनोह्वानागजिह्विका॥ नैपालीकुनटीगोलायवक्षारोयवाग्रजः॥ ८॥ पाक्योथसर्जिकाक्षारःकापोतःसुखवर्चकः
॥ सौवर्चलंस्याद्रुचकंत्वक्क्षीरीवंशलोचना॥ ९॥ शिग्रुजंश्वेतमरिचंमोरटंमूलमैक्षवं॥ ग्रंथिकंपिप्पलीमूलंचटकाशिरइत्यपि॥
१०॥ गोलोमीभूतकेशोनापत्रांगंरक्तचंदनं॥ त्रिकटुत्र्यूषणंव्योषंत्रिफलातुफलत्रिकं॥ १११॥ ॥ इतिवैश्यवर्गः॥ ॥

शूद्राश्चावरवर्णाश्चवृषलाश्चजघन्यजाः॥ आचंडालात्तुसंकीर्णाअंबष्ठकरणादयः॥ १॥ शूद्राविशोस्तुकरणोंबष्ठोवैश्याद्विजन्म
नोः॥ शूद्राक्षत्रिययोरुग्रोमागधःक्षत्रियाविशोः॥ २॥ माहिष्योर्याक्षत्रिययोःक्षत्तार्याशूद्रयोःसुतः॥ ब्राह्मण्यांक्षत्रियात्सूत
स्तस्यांवैदेहकोविशः॥ ३॥ रथकारस्तुमाहिष्यात्करण्यांयस्यसंभवः॥ स्याच्चंडालस्तुजनितोब्राह्मण्यांवृषलेनयः॥ ४॥ कारुः
शिल्पीसंहतैस्तैर्द्वयोःश्रेणिःसजातिभिः॥ कुलकःस्यात्कुलश्रेष्ठीमालाकारस्तुमालिकः॥ ५॥ कुंभकारःकुलालःस्यात्पल
गंडस्तुलेपकः॥ तंतुवायःकुविंदःस्यात्तुन्नवायस्तुसौचिकः॥ ६॥ नाडिंधमःस्वर्णकारःकलादोरुक्मकारके॥ स्याच्छांखिकःकांब
विकःशौल्बिकस्ताम्रकुट्टकः॥ ७॥ रंगाजीवश्चित्रकरःशस्त्रमार्जोसिधावकः॥ पादूकृच्चर्मकारःस्याद्व्योकारोलोहकारकः॥ ८
॥ तक्षातुवर्धकिस्त्वष्टारथकारस्तुकाष्ठतट्॥ ग्रामाधीनोग्रामतक्षःकौटतक्षोनधीनकः॥ ९॥ क्षुरीमुंडीदिवाकीर्तिर्नापितांतावसायि
नः॥ निर्णेजकःस्याद्रजकःशौंडिकोमंडहारकः॥ १०॥ जाबालःस्यादजाजीवोदेवाजीवस्तुदेवलः॥ स्यान्मायाशांबरीमायाकारस्तु

नधी

जा

प्रतिहारकः ॥११॥ शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः ॥ भरता इत्यपि नटाश्चारणास्तु कुशीलवाः ॥ १२॥ मार्दंगिकामौर
जिकाः पाणिवादास्तु पाणिघाः ॥ वेणुध्माः स्युर्वैणविका वीणावादास्तु वैणिकाः ॥ १३॥ जीवांतकः शाकुनिको द्वौ वागुरिकजालि-
कौ ॥ वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयं ॥ १४॥ भृतको भृतिभुक्कर्मकरो वैतनिकोपि सः ॥ वार्तावहो वैवधिको भारवाहस्तु भा
रिकः ॥ १५॥ विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ॥ निहीनोपसदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६॥ भृत्ये दासेरदासेय दासगो
प्यकचेटकाः ॥ नियोज्य किंकर प्रेष्य भुजिष्य परिचारकाः ॥ १७॥ पराचित परिस्कंद परजात परैधिताः ॥ मंदस्तुंदपरिमृजआ
लस्यः शीतकोलसोनुष्णः ॥ १८॥ दक्षे तु चतुर पेशल पटवः सूत्थान उष्णश्च ॥ चंडाल प्लव मातंग दिवाकीर्ति जनंगमाः ॥ १९॥ निषादश्व
पचावंतेवासि चांडाल पुक्कसाः ॥ भेदाः किरात शबर पुलिंदा म्लेंच्छजातयः ॥ २०॥ व्याधो मृगवधाजीवो मृगयुर्लुब्धकोपि सः ॥
कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१॥ शुनको भषकः श्वा स्यादलर्कस्तु स योगितः ॥ श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शु
नी ॥ २२॥ विट्चरः सूकरो ग्राम्यो वर्करस्तरुणः पशुः ॥ आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियां ॥ २३॥ दक्षिणारुर्लुब्धयोगाद्द
क्षिणेर्मा कुरंगकः ॥ चौरैकागारिकस्तेन दस्यु तस्कर मोषकाः ॥ २४॥ प्रतिरोधि परास्कंदि पाटच्चर मलिम्लुचाः ॥ चौरिका स्तैन्य चौर्ये
च स्तेयं लोप्त्रं तु तद्धने ॥ २५॥ वीतंसस्तूपकरणं बंधने मृगपक्षिणां ॥ उन्माथः कूटयंत्रं स्याद्वागुरा मृगबंधनी ॥ २६॥ शुल्बं वराटकं

स्त्री तु रज्जुस्त्रिषु वटी गुणः ॥ उद्घाटनं घटीयंत्रं सलिलोद्वाहनं प्रहेः ॥ २७॥ पुंसि वेमा वायदंडः सूत्राणि नरि तंतवः ॥ वाणिर्व्यूतिः
स्त्रियौ तुल्ये पुंस्त्वं लेख्यादिकर्मणि ॥ २८॥ पांचालिका पुत्रिका स्याद्वस्त्रदंतादिभिः कृता ॥ पिटकः पेटकः पेटा मंजूषाथ विहंगि
का ॥ २९॥ भारयष्टिस्तदालंबि शिक्यं काचोथ पादुका ॥ पादूरुपानत्स्त्री सैवानुपदीना पदायता ॥ ३०॥ नध्री वध्री वरत्रा स्यादश्वा
देस्ताडनी कशा ॥ चांडालिका तु कंडोल वीणा चंडालवल्लकी ॥ ३१॥ नाराची स्यादेषणिका शाणस्तु निकषः कषः ॥ व्रश्चनः पत्रप
रशुरीषिका तूलिका समे ॥ ३२॥ तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका ॥ आस्फोटनी वेधनिका कृपाणी कर्तरी समे ॥ ३३॥ वृ
क्षादनी वृक्षभेदी टंकः पाषाणदारणः ॥ क्रकचोस्त्री करपत्रं स्यादारा चर्मभेदिका ॥ ३४॥ सूर्मी स्थूणायः प्रतिमा शिल्पं कर्म क
लादिकं ॥ प्रतिमानं प्रतिबिंबं प्रतिमा प्रतियातना प्रतिच्छाया ॥ ३५॥ प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ॥ वा-
च्यलिंगाः समस्तुल्यः सदृक्षः सदृशः सदृक् ॥ ३६॥ साधारणः समानश्च स्युरुत्तरपदे त्वमी ॥ निभ संकाश नीकाश प्रतीकाशो
पमादयः ॥ ३७॥ कर्मण्या तु विधा भृत्या भृतयो भर्म वेतनं ॥ भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ॥ ३८॥ सुरा हलिप्रिया हाला
परिस्रुद्वरुणात्मजा ॥ गंधोत्तमा प्रसन्नेरा कादंबर्यः परिस्रुता ॥ ३९॥ मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणं ॥ शुंडापानं मद
स्थानं मधुवारा मधुक्रमाः ॥ ४०॥ मध्वासवो माधवको मधु माध्वीकमद्वयोः ॥ मैरेयमासवः सीधुर्मेदको जगलः समौ ॥ ४१॥ संधा

नंस्यादभिषवः किण्वंपुंसितुनग्नहूः ॥ कारोत्तरः सुरामंड आपानंपानगोष्ठिका ॥ ४२॥ चषकोस्त्रीपानपात्रंसरकोप्यनुतर्षणं॥ धूर्तोक्षदेवीकितवोऽक्षधूर्तोद्यूतकृत्समाः॥ ४३॥ स्युर्लग्नकाः प्रतिभुवः सभिकाद्यूतकारकाः ॥ द्यूतोस्त्रियामक्षवतीकैतवंपण इत्यपि॥ ४४॥ पणोक्षेषुग्लहोक्षास्तुदेवनाः पाशकाश्चते॥ परिणायस्तुशारीणांसमंतान्नयनेस्त्रियां॥ ४५॥ अष्टापदंशारिफलंप्राणिद्यूतंसमाह्वयः ॥ उक्ताभूरिप्रयोगत्वादेकस्मिन्येत्रयौगिकाः॥ ४६॥ तान्द्रूर्म्यादन्यतोवृत्तावूह्यालिंगांतरेपिते ॥ ४७॥

॥ ॥ इतिशूद्रवर्गः ॥ ॥ इत्यमरसिंहकृतौनामलिंगानुशासने ॥ द्वितीयकांडोभूम्यादिः सांगएवसमर्थितः ॥ २॥

॥ इतिद्वितीयकांडंसमाप्तम् ॥ ॥ श्रीमज्जगदीश्वरार्पणमस्तु ॥ ॥ शुभंभवतु ॥ ॥छ॥ ॥

॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥



## अथामरकोशेतृतीयकांडप्रारंभः

श्रीगणेशायनमः ॥ ॥ विशेष्यनिघ्नैः संकीर्णैर्नानार्थैरव्ययैरपि ॥ लिंगादिसंग्रहैर्वर्गाः सामान्ये वर्गसंश्रयाः ॥ १ ॥ स्त्रीदाराद्यैर्यद्विशेष्यंयादृशैः प्रस्तुतंपदैः ॥ गुणद्रव्यक्रियाशब्दास्तथास्युस्तस्यभेदकाः ॥ २ ॥ सुकृतीपुण्यवान्धन्योमहेच्छस्तुमहाशयः ॥ हृदयालुः सहृदयोमहोत्साहोमहोद्यमः ॥ ३ ॥ प्रवीणेनिपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ॥ वैज्ञानिकः कृतमुखः कृतीकुशलइत्यपि ॥ ४ ॥ पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः ॥ दक्षिणीयोदक्षिणार्हस्तत्रदक्षिण्यइत्यपि ॥ ५ ॥ स्युर्वदान्यः स्थूललक्ष्यदानशौंडाबहुप्रदे ॥ जैवातृकः स्यादायुष्मानंतर्वाणिस्तुशास्त्रवित् ॥ ६ ॥ परीक्षकः कारणिकोवरदस्तुसमर्धकः ॥ हर्षमाणोविकुर्वाणः प्रमनाहृष्टमानसः ॥ ७ ॥ दुर्मनाविमनाअंतर्मनाः स्यादुत्कउन्मनाः ॥ दक्षिणेसरलोदारौसुकलोदातृभोक्तरि ॥ ८ ॥ तत्परेप्रसितासक्ताविष्टार्थोद्युक्तउत्सुकः ॥ प्रतीतेप्रथितख्यातवित्तविज्ञातविश्रुताः ॥ ९ ॥ गुणैःप्रतीतेतुकृतलक्षणाहतलक्षणौ ॥ इभ्यआढ्योधनीस्वामीत्वीश्वरः पतिरीशिता ॥ १० ॥ अधिभूर्नायकोनेताप्रभुः परिवृढोधिपः ॥ अधिकर्धिः समृद्धः स्यात्कुटुंबव्यापृतस्तुयः ॥ ११ ॥ स्यादभ्यागारिकस्तस्मिन्नुपाधिश्चपुमानयं ॥ वरांगरूपोपेतोयः सिंहसंहननोहिसः ॥ १२ ॥ निर्वार्यः कार्यकर्तायः संपन्नः सत्वसंपदा ॥ अवाचिमूकोथमनोजवसः पितृसन्निभः ॥ १३ ॥ सत्कृत्यालंकृतांकन्यांयोददातिसकूकुदः ॥ लक्ष्मीवाल्लक्ष्मणः श्रीलः श्रीमान्स्निग्धस्तुवत्सलः ॥ १४ ॥ स्याद्दयालुः कारुणिकः कृपालुःसूरतःसमाः ॥ स्वतंत्रोपावृतः स्वैरीस्वच्छंदोनिरवग्रहः ॥ १५ परतंत्रः पराधीनः परवान्नाथवानपि ॥ अधीनोनिघ्नआयत्तोस्वच्छंदोगृह्यकोप्यसौ ॥ १६ ॥ खलपूः स्याद्बहुकरोदीर्घसूत्रश्चिरक्रियः ॥ जाल्मोसमीक्ष्यकारीस्यात्कुंठोमंदः क्रियासुयः ॥ १७ ॥ कर्मक्षमोलंकर्मीणः क्रियावान्कर्मसूद्यतः ॥ सकार्मः कर्मशीलोयः कर्मशूरस्तुकर्मठः ॥ १८ ॥ कर्मण्यभुक्कर्मकरः कर्मकारस्तुसत्क्रियः ॥ अपस्नातोमृतस्नातआमिषाशीतुशौष्कुलः ॥ १९ ॥ बुभुक्षितः स्यात्क्षुधितोजिघत्सुरशनायितः ॥ परान्नः परपिंडादोभक्षकोघस्मरोद्मरः ॥ २० ॥ आद्यूनः स्यादौदरिकोविजिगीषाविवर्जिते ॥ उभौत्वात्मंभरिः कुक्षिंभरिः स्वोदरपूरके ॥ २१ ॥ सर्वान्नीनस्तुसर्वान्नभोजीगृध्नस्तुगर्धनः ॥ लुब्धोभिलाषुकस्तृष्णक्समौलोलुपलोलुभौ ॥ २२ ॥ सोन्मादस्तून्मदिष्णुः स्यादविनीतः समुद्धतः ॥ मत्तेशौंडोत्कटक्षीबाः कामुकेकमितानुकः ॥ २३ ॥ कम्रः कामयिताभीकः कमनः कामनोभिकः ॥ विधेयोविनयग्राहीवचनेस्थितआश्रवः ॥ २४ ॥ वश्यः प्रणेयोनिभृतविनीतप्रश्रिताः समाः ॥ धृष्णोधृष्णुर्वियातश्चप्रगल्भः प्रतिभान्विते ॥ २५ ॥ स्यादधृष्टेतुशालीनोविलक्षोविस्मयान्विते ॥ अधीरेकातरस्त्रस्तेभीरुभीलुकभीरुकाः ॥ २६ ॥ आशंसुराशंसितरिगृहयालुर्गृहीतरि ॥ श्रद्धालुः श्रद्धयायुक्तेपतयालुस्तुपातुके ॥ २७ ॥ लज्जाशीलेपत्रपिष्णुर्वंदारुरभिवादके ॥ शरारुर्घातुकोहिंस्रः स्याद्वर्धिष्णुश्चवर्धनः ॥ २८ ॥ उत्पतिष्णुस्तूत्पतितालंकरिष्णुस्तुमंडनः ॥ भूष्णुर्भविष्णुर्भवितावर्निष्णुर्वर्तनः समौ ॥ २९ ॥ निराकरिष्णुः क्षि[illegible] स्यात्सांद्रः स्निग्धस्तुमेदुरः ॥ ज्ञा

तातुविदुरोविंदुर्विकासीतुविकस्वरः ॥ ३० ॥ विसृत्वरोविसृमरः प्रसारीचविसारिणि ॥ सहिष्णुः सहनः क्षंतातितिक्षुः क्षमि
ताक्षमी ॥ ३१ ॥ क्रोधनोमर्षणः कोपीचंडस्त्वत्यंतकोपनः ॥ जागरूकोजागरिताघूर्णितः प्रचलायितः ॥ ३२ ॥ स्वप्नक्शयालुर्नि
द्रालुर्निद्राणशयितौसमौ ॥ पराङ्मुखः पराचीनः स्यादवाङ्प्यधोमुखः ॥ ३३ ॥ देवानंचतिदेवद्र्यङ्विष्वद्र्यङ्विष्वगंचति ॥ यः स-
हांचतिसध्र्यङ्ससतिर्यङ्यस्तिरोंचति ॥ ३४ ॥ वदोवदावदोवक्तावागीशोवाक्पतिः समौ ॥ वाचोयुक्तिपटुर्वाग्मीवावदूकोति
वक्तरि ॥ ३५ ॥ स्याज्जल्पाकस्तुवाचालोवाचाटोबहुगर्ह्यवाक् ॥ दुर्मुखेमुखराबद्धमुखौशक्लः प्रियंवदे ॥ ३६ ॥ लोहलः स्यादस्फु
टवाग्गर्ह्यवादीतुकद्वदः ॥ समौकुवादकुचरौस्यादसौम्यः स्वरोस्वरः ॥ ३७ ॥ रवणः शब्दनोनांदीवादीनांदीकरः समौ ॥ जडो-
ज्ञएडमूकस्तुवक्तुंश्रोतुमशिक्षिते ॥ ३८ ॥ तूष्णींशीलस्तुतूष्णीकोनग्नोःवासादिगंबरः ॥ निष्कासितोवकृष्टः स्यादपध्वस्त-
स्तुधिक्कृतः ॥ ३९ ॥ आत्तगर्वोभिभूतः स्याद्दापितः साधितः समौ ॥ प्रत्यादिष्टोनिरस्तः स्यात्प्रत्याख्यातोनिराकृतः ॥ ४० ॥ नि-
कृतः स्याद्विप्रकृतेविप्रलब्धस्तुवंचितः ॥ मनोहतः प्रतिहतः प्रतिबद्धोहतश्चसः ॥ ४१ ॥ अधिक्षिप्तः प्रतिक्षिप्तोबद्धेकीलितसं
यतौ ॥ आपन्नआपत्प्राप्तः स्यात्कांदिशीकोभयद्रुतः ॥ ४२ ॥ आक्षारितः क्षारितोभिशस्तेसंकसुकोऽस्थिरे ॥ व्यसनार्तोपरक्तौ
द्वौविहस्तव्याकुलौसमौ ॥ ४३ ॥ विक्लवोविव्हलः स्यात्तुविवशोरिष्टदुष्टधीः ॥ कश्यः कशार्हेसन्नद्धेत्वाततायीवधोद्यते ॥ ४४ ॥



द्वेष्येत्वक्षिगतोवध्यः शीर्षच्छेद्यइमौसमौ ॥ विष्योविषेणयोवध्योमुसल्योमुसलेनयः ॥ ४५ ॥ शिश्विदानोकृष्णकर्माचपलश्चिकुरः
समौ ॥ दोषैकदृक्पुरोभागीनिकृतस्त्वनृजुः शठः ॥ ४६ ॥ कर्णेजपः सूचकः स्यात्पिशुनोदुर्जनः खलः ॥ नृशंसोघातुकः क्रूरः पापोधूर्त
स्तुवंचकः ॥ ४७ ॥ अज्ञेमूढयथाजातमूर्खवैधेयबालिशाः ॥ कदर्येकृपणक्षुद्रकिंपचानमितंपचाः ॥ ४८ ॥ निःस्वस्तुदुर्विधोदीनोद
रिद्रोदुर्गतोपिसः ॥ वनीयकोयाचनकोमार्गणोयाचकार्थिनौ ॥ ४९ ॥ अहंकारवानहंयुः शुभंयुस्तुशुभान्वितः ॥ दिव्योपपादुका
देवानृगवाद्याजरायुजाः ॥ ५० ॥ स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोंऽडजाः ॥ उद्भिदस्तरुगुल्माद्याउद्भिदुद्भिज्जमुद्भिदं ॥ ५१ ॥ सुं
दररुचिरंचारुसुषुमंसाधुशोभनं ॥ कांतंमनोरमंरुच्यंमनोज्ञंमंजुमंजुलं ॥ ५२ ॥ तदासेचनकंतृप्तेर्नास्त्यंतोयस्यदर्शनात् ॥ अभी
ष्टेभीप्सितंहृद्यंदयितंवल्लभंप्रियं ॥ ५३ ॥ निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः ॥ कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः ॥
५४ ॥ मलीमसंतुमलिनंकच्चरंमलदूषितं ॥ पूतंपवित्रंमेध्यंचवीध्रंतुविमलार्थकं ॥ ५५ ॥ निर्णिक्तंशोधितंमृष्टंनिःशोध्यमनवस्क
रं ॥ असारंफल्गुशून्यंतुवशिकंतुच्छरिक्तके ॥ ५६ ॥ क्लीबेप्रधानंप्रमुखप्रवेकानुत्तमोत्तमाः ॥ मुख्यवर्यवरेण्याश्चप्रवर्हानवरा-
र्ध्यवत् ॥ ५७ ॥ परार्ध्याग्र्यप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियं ॥ श्रेयान्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने ॥ ५८ ॥ स्युरुत्तरपदेव्याघ्र
पुंगवर्षभकुंजराः ॥ सिंहशार्दूलनागाद्याः पुंसिश्रेष्ठार्थगोचराः ॥ ५९ ॥ अप्राग्र्यंद्वयहीनेद्वेअप्रधानोपसर्जने ॥ विशंकटंपृथुबृ

वान

श्रा

हृद्विशालंपृथुलंमहत् ॥६०॥ वड्रोरुविपुलंपीनपीव्नीतुस्थूलपीवरे ॥ स्तोकाल्पक्षुल्लकाः श्लक्ष्णंसूक्ष्मंदभ्रंकृशंतनु ॥६१॥ स्त्रियां
मात्रात्रुटीपुंसिलवलेशकणाणवः ॥ अत्यल्पेऽल्पिष्ठमल्पीयःकनीयोणीयइत्यपि ॥६२॥ प्रभूतंप्रचुरंप्राज्यमदभ्रंबहुलंबहु ॥
पुरुहूः पुरुभूयिष्ठंस्फारंभूयश्चभूरिच ॥६३॥ परःशताद्यास्तेयेषांपरासंख्याशतादिकात् ॥ ॥ आर्या ॥ ॥ गणनीयेतु
गणेयंसंख्यातेगणितमथसमंसर्वं ॥ विश्वमशेषंकृत्स्नंसमस्तनिखिलाखिलानिनिःशेषं ॥६४॥ समग्रंसकलंपूर्णमखंडंस्या
दनूनके ॥ घनंनिरंतरंसांद्रंपेलवंविरलंतनु ॥६५॥ समीपेनिकटासन्नसन्निकृष्टसनीडवत् ॥ सदेशाभ्याशसविधसमर्या
दसवेशवत् ॥६६॥ उपकंठांतिकाभ्यर्णाभ्यग्राअप्यभितोव्ययं ॥ संसक्तेत्वव्यवहितमपदांतरमित्यपि ॥६७॥ नेदिष्ठमंतिकतमं
स्याद्दूरंविप्रकृष्टकं ॥ दवीयश्चदविष्ठंचसुदूरेदीर्घमायतं ॥६८॥ वर्तुलंनिस्तलंवृत्तंबंधुरंतून्नतानतं ॥ उच्चप्रांशून्नतोदग्रोच्छ्रि
तास्तुंगेऽथवामने ॥६९॥ न्यड्नीचखर्वन्हस्वाः स्युरवाग्रेवनतानतं ॥ अरालंवृजिनंजिह्ममूर्मिमत्कुंचितंनतं ॥७०॥ आविद्धंकुटि
लंभुग्नंवेल्लितंवक्रमित्यपि ॥ ऋजावजिह्मप्रगुणौव्यस्तेत्वप्रगुणाकुलौ ॥७१॥ शाश्वतस्तुध्रुवोनित्यसदातनस■तनाः ॥ स्थास्नुः
स्थिरतरःस्थेयानेकरूपतयातुयः ॥७२॥ कालव्यापीसकूटस्थःस्थावरोजंगमेतरः ॥ चरिष्णुजंगमचरंत्रसमिंगंचराचरं ॥७३॥ चल
नंकंपनंकंप्रंचलंलोलंचलाचलं ॥ चंचलंतरलंचैवपारिप्लवपरिप्लवे ॥७४॥ अतिरिक्तःसमधिकोदृढसंधिस्तुसंहतः ॥ कर्कशंक



ठिनंक्रूरंकठोरंनिष्ठुरंदृढं ॥७५॥ जंठरंमूर्तिमन्मूर्तंप्रवृद्धंप्रौढमेधितं ॥ पुराणेप्रतनप्रत्नपुरातनचिरंतनाः ॥७६॥ प्रत्यग्रोभिनवो
नव्योनवीनोनूतनोनवः ॥ नूत्नश्चसुकुमारंतुकोमलंमृदुलंमृदु ॥७७॥ अन्वगन्वक्षमनुगेनुपदंक्लीबमव्ययं ॥ प्रत्यक्षंस्यादैंद्रिय
कमप्रत्यक्षमतींद्रियं ॥७८॥ एकतानोनन्यवृत्तिरेकाग्रै■कायनावपि ॥ अप्येकसर्गएकाग्र्योप्येकायनगतोपिसः ॥७९॥ पुंस्यादिःपूर्व-
पौरस्त्यप्रथमाद्याअथास्त्रियां ॥ अंतोजघन्यंचरममंत्यपाश्चात्यपश्चिमं ॥८०॥ मोघंनिरर्थकंस्पष्टंस्फुटंप्रव्यक्तमुल्बणं ॥ साधा
रणंतुसामान्यमेकाकीत्वेकएककः ॥८१॥ भिन्नार्थकाअन्यतरएकस्त्वोन्येतरावपि ॥ उच्चावचंनैकभेदमुच्चंडमविलंबितं ॥८२॥
अरुंतुदस्तुमर्मस्पृगबाधंतुनिरर्गलं ॥ प्रसव्यंप्रतिकूलंस्यादपसव्यमपष्ठुच ॥८३॥ वामंशरीरंसव्यंस्यादपसव्यंतुदक्षिणं ॥ संकटं
नातुसंबाधःकलिलंगहनंसमे ॥८४॥ संकीर्णेसंकुलाकीर्णेमुंडितंपरियापितं ॥ ग्रंथितंसंदितंदृब्धंविसृतंविस्तृतंततं ॥८५॥
अंतर्गतंविस्मृतंस्यात्प्राप्तप्रणिहितेसमे ॥ वेल्लितप्रेंखिताधूतचलिताकंपिताधुते ॥८६॥ नुत्तनुन्नास्तनिष्ठ्यूताविद्धक्षिप्तेरि-
ताःसमाः ॥ परिक्षिप्तंतुनिर्वृतंमुषितंमुषितार्थकं ॥८७॥ प्रवृद्धप्रसृतेन्यस्तनिसृष्टेगुणिनाहते ॥ निदिग्धोपचितेगूढगुप्तेगुंठि
तरूषिते ॥८८॥ द्रुतावदीर्णेउद्गूर्णोद्यूतेकाचितशिक्यिते ॥ घ्राणघ्रातेदिग्धलिप्तेसमुदक्तोद्धृतेसमे ॥८९॥ वेष्टितंस्याद्वलयि
तंसंवीतंरुद्धमावृतं ॥ रुग्णंभुग्नेथनिशितंक्ष्णुतशातानितेजिते ॥९०॥ स्याद्विनाशोन्मुखंपक्वंन्हीणन्हीतौतुलज्जिते ॥ वृत्तेतु

वृत्तव्यावृत्तौसंयोजितउपाहितः ॥९१॥ प्राप्यंगम्यंसमासाद्यंस्यन्नंरीणंस्नुतंस्रुतं ॥ संगूढः स्यात्संकलितोऽवगीतः ख्यातगर्हणे ॥९२॥ विविधः स्याद्बहुविधोनानारूपः पृथग्विधः ॥ अवरीणोधिक्कृतश्चाप्यवध्वस्तोवचूर्णितः ॥९३॥ अनायासकृतंफांटंस्वनितंध्वनितंसमे ॥ बद्धेसंदानितंमूतमुद्दितंसंदितंसितं ॥९४॥ निष्पक्वंक्वथितंपाकेक्षीराज्य[illegible]शृतं ॥ निर्वाणोमुनिवह्न्यादौनिर्वातस्तुगतेनिले ॥९५॥ पक्वंपरिणतेगूनंहन्नेमीढंतुमूत्रिते ॥ पुष्टेतुपुषितंसोढेक्षांतमुद्धांतमुद्गते ॥९६॥ दांतस्तु[illegible]मितेशांतःशमितेप्रार्थितेर्दितः ॥ ज्ञप्तस्तुज्ञपितेछन्नश्छादितेपूजितेंचितः ॥९७॥ पूर्णस्तुपूरितेक्लिष्टःक्लिशितेवसितेसितः ॥ प्रुष्टप्लुष्टोषितादग्धे[illegible]ष्टत्वष्टौतनूकृते ॥९८॥ वेधितच्छिद्रितौविद्धेविन्नवित्तौविचारिते ॥ निष्प्रभेविगतारोकौविलीनेविद्रुतद्रुतौ ॥९९॥ सिद्धेनिर्वृत्तनिष्पन्नौदारितेभिन्नभेदितौ ॥ ऊतंस्यूतमुतंचेतित्रितयंतंतुसंतते ॥१००॥ ॥आर्या॥ ॥ स्यादर्हितेनमस्यितनमसितमपचायितार्चितापचितं ॥ वरिवसितेवरिवस्यितमुपासितंचोपचरितंच ॥१॥ संतापितसंतप्तौधूपितधूपायितौचदूनश्च ॥ हृष्टेमत्तस्तृप्तःप्रह्लन्नःप्रमुदितःप्रीतः ॥२॥ छिन्नंछातंलूनंकृत्तंदातंदितंछितंवृक्णं ॥ स्रस्तंध्वस्तंभ्रष्टंस्कन्नंपन्नंच्युतंगलितं ॥३॥ लब्धंप्राप्तंविन्नंभावितमासादितंचभूतंच ॥ अन्वेषितंगवेषितमन्विष्टंमार्गितंमृगितं ॥४॥ आर्द्रंसार्द्रंक्लिन्नंतिमितंस्तिमितंसमुन्नमुत्तंच ॥ त्रातंत्राणंरक्षितमवितंगोपायितंगुप्तं ॥५॥ अवगणितमवमतावज्ञातेवमानितंचपरिभूते ॥



त्यक्तंहीनंविधुतंसमुज्झितंधूतमुत्सृष्टं ॥६॥ उक्तंभाषितमुदितंजल्पितमाख्यातमभिहितंलपितं ॥ बुद्धंबुधितंमनितंविदितंप्रतिपन्नमवसितावगते ॥७॥ ऊरीकृतमुररीकृतमंगीकृतमाश्रुतंप्रतिज्ञातं ॥ संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतं ॥८॥ ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि ॥ अपिगीर्णवर्णिताभिष्टुतेडितानिस्तुतार्थानि ॥९॥ भक्षितचर्वित[illegible]प्रत्यवसितगिलितखादितप्सातं ॥ अभ्यवहृतान्नजग्धग्रस्तग्लस्ताशितंभुक्ते ॥१०॥ क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः ॥ क्षिप्रक्षुद्राभीप्सितपृथुपीवरबहुप्रकर्षार्थाः ॥११॥ साधिष्ठद्राधिष्ठस्फेष्ठगरिष्ठह्रसिष्ठ[illegible] ॥ बाढव्यायतबहुगुरुवामनवृंदारकातिशये ॥११२॥ ॥इतिविशेष्यनिघ्नवर्गः॥ ॥प्रकृतिप्रत्ययार्थाद्यैः संकीर्णेलिंगमुन्नयेत् ॥ कर्मक्रियातत्सातत्येगम्येस्युरपरस्पराः ॥१॥ साकल्यासंगवचनेपारायणपरायणे ॥ यदृच्छास्वैरिताहेतुशून्यात्वास्याविलक्षणं ॥२॥ शमथस्तुशमः शांतिर्दांतिस्तुदमथोदमः ॥ अवदानंकर्मवृत्तंकाम्यदानंप्रवारणं ॥३॥ वशक्रियासंवननंमूलकर्मतुकार्मणं ॥ विधूननंविधुवनंतर्पणंप्रीणनावनं ॥४॥ पर्याप्तिः स्यात्परित्राणंहस्तवारणमित्यपि ॥ सेवनंसीवनंस्यूतिर्विदरः स्फुटनंभिदा ॥५॥ आक्रोशनमभीषंगः संवेदोवेदनानना ॥ संमूर्छनमभिव्याप्तिर्याञ्चाभिक्षार्थनार्दना ॥६॥ वर्धनंछेदनेथद्वेआनंदनसभाजने ॥ आप्रच्छन्नमथाम्नायः संप्रदायः क्षयेक्षिया ॥७॥ ग्रहेग्राहोवशः कांतौरक्ष्णस्त्राणेरणः क्वणे ॥ व्यधोवेधे

पचापाके हवो हूतौ वरो वृतौ ॥ ८ ॥ ओषः प्लोषे नयो नाये ज्यानिर्जीर्णौ भ्रमो भ्रमौ ॥ स्फातिर्वृद्धौ प्रथा ख्यातौ स्पृष्टिः पृक्तौ स्नवः
स्रवे ॥ ९ ॥ एधा समृद्धौ स्फुरणे स्फुरणा प्रमितौ प्रमा ॥ प्रसूतिः प्रसवे श्च्योते प्राघारः क्लमथः क्लमे ॥ १० ॥ उत्कर्षोतिशये संधिः श्ले
षो विषय आश्रये ॥ क्षिपायां क्षेपणं गीर्णिर्गिरौ गुरणमुद्यमे ॥ ११ ॥ उन्नाय उन्नये श्रायः श्रयणे जयने जयः ॥ निगादो निगदे मादो
मद उद्वेग उद्भ्रमे ॥ १२ ॥ विमर्दनं परिमलोभ्युपपत्तिरनुग्रहः ॥ निग्रहस्तु विरोधस्यादभियोगस्त्वभिग्रहः ॥ १३ ॥ मुष्टिबंधस्तु संग्रा-
होडिंबे डमरविप्लवौ ॥ बंधनं प्रसितिश्चारः स्पर्शस्प्रष्टौ प्रतसरि ॥ १४ ॥ निकारो विप्रकारः स्यादाकारस्त्विंग इंगितं ॥ परिणामो
विकारो द्वे समे विकृतिविक्रिये ॥ १५ ॥ अपहारस्त्वपचयः समाहारः समुच्चये ॥ प्रत्याहार उपादानं विहारस्तु परिक्रमः ॥ १६
॥ अभिहारोभिग्रहणं निर्हारोभ्यवकर्षणं ॥ अनुहारोऽनुकारः स्यादर्थस्यापगमे व्ययः ॥ १७ ॥ प्रवाहस्तु प्रवृत्तिः स्यात्प्रवह्
गमनं बहिः ॥ वियामो वियमो यामो यमः संयामसंयमौ ॥ १८ ॥ हिंसाकर्माभिचारः स्याज्जागर्या जागरा द्वयोः ॥ विघ्नोंतरायः प्र
त्यूहः स्यादुपघ्नोंतिकाश्रये ॥ १९ ॥ निर्वेश उपभोगः स्यात्परिसर्पः परिक्रिया ॥ विधुरं तु प्रविश्लेषोऽभिप्रायश्छंद आशयः ॥ २०
॥ संक्षेपणं समसनं पर्यवस्था विरोधनं ॥ परिसर्या परीसारः स्यादास्या त्वासना स्थितिः ॥ २१ ॥ विस्तारो विग्रहो व्यासः स च श
ब्दस्य विस्तरः ॥ स्यान्मर्दनं संवहनं विनाशः स्याददर्शनं ॥ २२ ॥ संस्तवः स्यात्परिचयः प्रसरस्तु विसर्पणं ॥ नीवाकस्तु प्र-



यामः स्यात्सन्निधिः सन्निकर्षणं ॥ २३ ॥ लवोभिलावो लवने निष्पावः पवने पवः ॥ प्रस्तावः स्यादवसरस्त्रसरः सूत्रवेष्टनं ॥
२४ ॥ प्रजनः स्यादुपसरः प्रश्रयप्रणयौ समौ ॥ धीशक्तिर्निष्क्रमोस्त्री तु संक्रमो दुर्गसंचरः ॥ २५ ॥ प्रत्युत्क्रमः प्रयोगार्थः प्रक्र
मः स्यादुपक्रमः ॥ स्यादभ्यादानमुद्घात आरंभः संभ्रमस्त्वरा ॥ २६ ॥ प्रतिबंधः प्रतिष्टंभो वनायस्तु निपातनं ॥ उपलंभस्त्वनुभवः
समालंभो विलेपनं ॥ २७ ॥ विप्रलंभो विप्रयोगो विलंभस्त्वतिसर्जनं ॥ विश्रावस्तु प्रविख्यातिरवेक्षा प्रतिजागरः ॥ २८ ॥ निपाठनि
पठौ पाठे तेमस्तेमौ समुंदने ॥ आदीनवास्रवौ क्लेशे मेलके संगसंगमौ ॥ २९ ॥ संवीक्षणं विचयनं मार्गणं मृगणा मृगः ॥ परिरंभः परि-
ष्वंगः संश्लेष उपगूहनं ॥ ३० ॥ निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणं ॥ प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ॥ ३१ ॥ उपशा
यो विशायश्च पर्यायशयनार्थकौ ॥ आर्तनं च ऋतीया च हृणीया च घृणार्थके ॥ ३२ ॥ स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये
॥ पर्ययोतिक्रमस्तस्मिन्नतिपात उपात्ययः ॥ ३३ ॥ प्रेषणं यत्समाहूय तत्र स्यात्प्रतिशासनं ॥ स संस्तावः क्रतुषु या स्तुतिभूमिर्द्वि
जन्मनां ॥ ३४ ॥ निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः ॥ स्तंबघ्नस्तु स्तंबघनः स्तंबो येन निहन्यते ॥ ३५ ॥ आविधो विध्यते येन त
त्र विष्वक्समे निघः ॥ उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकौ ॥ ३६ ॥ निगारोद्गारविक्षावोद्ग्राहास्तु गरणादिषु ॥ आरत्यव
रतिविरतय उपरामेथास्त्रियां तु निष्ठेवः ॥ निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि ॥ ३७ ॥ जवने जूतिः सातिस्त्ववसाने स्या

दथज्वरेजूर्तिः॥ उदजस्तुपशुप्रेरणमकरणिरित्यादयः शापे॥३८॥ गोत्रांतेभ्यस्तस्यवृंदमित्यौपगवकादिकं॥ आपूपिकंशा
ष्कुलिकमेवमाद्यमचेतसां॥३९॥ माणवानांतु माणव्यंसहायानांसहायता॥ हल्याहलानांब्राह्मण्यवाडव्येतुद्विजन्मनां॥४०॥
द्वेपर्शुकानांपृष्ठानांपार्श्वंपृष्ठ्यमनुक्रमात्॥४१॥ खलानांखलिनीखल्याप्यथमानुष्यकंनृणां॥ ग्रामताजनताधूम्यापाश्या
गल्यापृथक्पृथक्॥४२॥ अपिसाहस्रकारीषचार्मणाथर्वणादिकं॥४३॥ ॥इतिसंकीर्णवर्गः॥ ॥नानार्थाःकेपिकां
तादिवर्गेष्वेवात्रकीर्तिताः॥भूरिप्रयोगायेयेषुपर्यायेष्वपितेषुते॥१॥ आकाशेत्रिदिवेनाकोलोकस्तुभुवनेजने॥पद्ये
यशसिचश्लोकः शरेखड्गेचसायकः॥२॥जंबुकौक्रोष्टुवरुणौपृथुकौचिपिटार्भकौ॥ आलोकौदर्शनोद्योतौभेरीपटह-
आनकौ॥३॥उत्संगचिन्हयोरंकः कलंकोंकापवादयोः॥तक्षकोनागवर्धक्योरर्कः स्फटिकसूर्ययोः॥४॥मारुतेवेधसिब्र
ध्नेपुंसिकः कंशिरोंबुनोः॥स्यात्पुलाकस्तुच्छधान्येसंक्षेपेभक्तसिक्थके॥५॥उलूके॰करिणः पुच्छमूलोपांतेचपेचकः॥कमं
डलौचकरकः सुगतेचविनायकः॥६॥ किष्कुर्हस्तेवितस्तौचशूककीटेचवृश्चिकः॥ प्रतिकूलेप्रतीकस्त्रिष्वेकदेशेतुपुंस्ययं
॥७॥ स्याद्भूतिकंतुभूनिंबेकट्फलेभूस्तृणेपिच॥ज्योत्स्निकायांचघोषेचकोशातक्यथकट्फले॥८॥सितेचखदिरेसोमे-
वल्कः स्यादथसिल्हके॥ तिलकल्केचपिण्याकोबाल्हीकंरामठेपिच॥९॥महेंद्रगुग्गुलूलूकव्यालग्राहिषुकौशिकः॥ रुक्तापशं



का॰स्यातंकः स्वल्पेपिक्षुल्लकस्त्रिषु॥१०॥ जैवातृकः शशांकेपिखुरेप्यश्वस्यवर्तकः॥ व्याघ्रेपिपुंडरीकोनायवान्यामपिदीपकः॥
११॥ शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेपिगैरिकं॥ पीडार्थेपिव्यलीकंस्याद्लीकंत्वप्रियेनृते॥१२॥शीलान्वयावनूकेद्वेशल्केश
कलवल्कले॥ साष्टेशतेसुवर्णानांहेम्न्युरोभूषणेपले॥१३॥दीनारेपिचनिष्कोस्त्रीकल्कोस्त्रीशर्मएनसोः॥ दंभेप्यथपिनाको-
स्त्रीशूलशंकरधन्वनोः॥१४॥ धेनुकातुकरेण्वांचमेघजालेचकालिका॥ कारिकायातनावृत्त्योः कर्णिकाकर्णभूषणे॥१५॥
करिहस्तांगुलोपद्मबीजकोश्यांत्रिषूत्तरे॥ वृंदारकौरूपिमुख्यावेकेमुख्यान्यकेवलाः॥ स्याद्दांभिकःकौक्कुटिकोयश्चादूरेरिते
क्षणः॥लालाटिकः प्रभोर्भालदर्शीकार्याक्षमश्चयः॥१७॥ भूभृन्नितंबवलयचक्रेषुकटकोस्त्रियां॥ सूच्यग्रेक्षुद्रशत्रौच
रोमहर्षेचकंटकः॥१८॥ पाकोर्पक्तिशिशूमध्यैरत्नेनेतरिनायकः॥ पर्यंकः स्यात्परिकरेप्याद्र्यामपिलुब्धकः॥१९॥ पेट
कस्त्रिषुवृंदेपिगुरोदेश्येपिदेशिकः॥ खेटकौग्रामफलकौधीवरेपिचजालिकः॥२०॥पुष्परेणौचकिंजल्कः शुल्कोस्त्री
स्त्रीधनेपिच॥ स्यात्कल्लोलेप्युत्कलिकावार्धकंवृंदप्रावयोः॥२१॥ करिण्यांचापिगणिकादारकौबालभेदकौ॥अंधेप्यने
डमूकः स्याद्टंकौदर्पाश्मदारणौ॥२२॥[illegible]॥ ॥इतिकांताः॥ ॥मयूखस्त्विट्करः
ज्वालास्वलिबाणौशिलीमुखौ॥ शंखोनिधौललाटास्थ्निकंबौनस्त्रींद्रियेपिखं॥२३॥ घृणिज्वालेअपिशिखे॥ ॥इतिखां

टे स्याद्भ्या: पिच

ताः॥ ॥शैलवृक्षौनगावगौ॥ आशुगौवायुविशिखौशरार्कविहगाः खगाः॥२४॥ पतंगौपक्षिसूर्यौच पूगः क्रमुकवृंदयोः॥
पशवोपिमृगावेगः प्रवाहजवयोरपि॥२५॥ परागः कौसुमेरेणौस्नानीयादौरजस्यपि॥ गजेपिनागमातंगावपांगस्तिलकेपि
च॥२६॥ सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु॥ योगः सन्नहनोपायध्यानसंगतियुक्तिषु॥२७॥ भोगः सुखेस्त्र्या-
दिभृतावहेश्चफणकाययोः॥ चातकेहरिणेपुंसिसारंगः शबलें [illegible] षु॥२८॥ कपौचप्लवगः शापेत्वभिषंगः पराभवे॥ याना-
द्यंगेयुगः पुंसियुगंयुग्मेकृतादिषु॥२९॥ स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले॥ लक्ष्यदृष्ट्यास्त्रियांपुंसिगौर्लिंगंचिन्हशेफ-
सोः॥३०॥ शृंगंप्राधान्यसान्वोश्चवरांगंमूर्धगुह्ययोः॥ भगंश्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु॥३१॥ ॥इतिगांताः॥
॥परिघः परिघातेस्त्रेप्योघोवृंदेंभसांरये॥ मूल्येपूजाविधावर्घौंहोदुःखव्यसनेष्वघं॥३२॥ त्रिष्विष्टेल्पेलघु [illegible]
~~[illegible] स्मृताः~~॥ ॥इतिघांताः॥ ॥~~[illegible]~~स्मृताः काचाः शिक्यमृद्भेददृग्रुजः॥३३॥ विपर्यासेविस्तरेच
प्रपंचः पावकेशुचिः॥ मास्यमात्येचात्युपधेपुंसिमेध्येसितेत्रिषु॥३४॥ अभिष्वंगेस्पृहायांच्गभस्तौचरुचिः स्त्रियां
॥ ॥इतिचांताः॥ ॥"प्रसन्नेभल्लुकेपुंच्छोगुच्छस्तबकहारयोः॥ परिधानांचलेकच्छोजलप्रांतेत्रिलिंगकः॥
॥इतिक्षेपकच्छांताः॥" ॥केकिताक्ष्यावहिभुजौदंतविप्रांडजाद्विजाः॥३५॥ अजाविष्णुहरश्छागागोष्ठाध्व

निवहाव्रजाः॥ धर्मराजौजिनयमौकुंजोदंतेपिनस्त्रियां॥३६॥ वलजेक्षेत्रपूर्द्वारेवलजावल्गुदर्शना॥ समेक्ष्मांशेरणेप्या
जिः प्रजास्यात्संततौजने॥३७॥ अब्जौशंखशशांकौच स्वकेनित्येनिजंत्रिषु॥ ॥इतिजांताः॥ ॥पुंस्यात्मनिप्रवीणे
चक्षेत्रज्ञोवाच्यलिंगकः॥३८॥ (संज्ञानामनिगायत्र्यांचेतनारविंयोषिताः)॥ संज्ञास्याच्चेतनानामहस्ताद्यैश्चार्थसूचना॥३९
॥दोषज्ञौवैद्यविद्वांसौज्ञोविद्वान्सोमजेपिच॥ विज्ञौप्रवीणकुशलौकालज्ञौज्ञानिकुक्कुटौ॥४०॥ ॥इतिज्ञांताः॥ ॥
काकेभगंडौकरटौगजगंडकटीकटौ॥ शिपिविष्टस्तुखलतौदुश्चर्मणिमहेश्वरे॥४१॥ देवशिल्पिन्यपित्वष्टादिष्टंदैवेपिनद्व
योः॥ रसेकटुः कट्वकार्येत्रिषुमत्सरतीक्ष्णयोः॥४२॥ रिष्टंक्षेमाशुभाभावेष्वरिष्टेतुशुभाशुभे॥ मायानिश्चलयंत्रेषुकैत
वानृतराशिषु॥४३॥ अयोघनेशैलशृंगेसीरांगेकूटमस्त्रियां॥ सूक्ष्मैलायांत्रुटिः स्त्रीस्यात्कालेऽल्पेसंशयेपिसा॥४४॥ अत्यु
त्कर्षाश्रयः कोट्योमूलेलग्नकचेजटा॥ व्युष्टिः फलेसमृद्धौच दृष्टिर्ज्ञानेक्ष्णिदर्शने॥४५॥ इष्टिर्यागेच्छयोःसृष्टिर्निश्चितेब
हुनित्रिषु॥ कृष्टेतुकृच्छ्रगहनेदक्षामंदागदेषुतु॥४६॥ पटुद्वौवाच्यलिंगौचघुष्टिर्घर्षणशूकरौ॥ घटोगोष्ठ्यांहस्तिपंक्तौकु
पीटउदकेजले)॥४७॥ ॥इतिटांताः॥ ॥(नीलकंठोमयूरः स्यो)नीलकंठः शिवेपिच॥ पुंसिकोष्ठोंतर्जठरंकुसूलों
तर्गृहंतथा॥४८॥ निष्ठानिष्पत्तिनाशांताः काष्ठोत्कर्षेस्थितौदिशि॥ त्रिषुज्येष्ठोतिशस्तेपिकनिष्ठोऽतियुवाल्पयोः॥४९

॥ ॥ इतिठांताः॥ ॥ दंडोस्त्रीलगुडेपिस्याद्गुडोगोलेक्षुपाकयोः॥ सर्पमांसात्पशूव्याडौभूगौवाचस्त्विडाइलाः॥५०॥
क्ष्वेडावंशशलाकापिनाडीकालेपिषट्क्षणे॥ कांडोस्त्रीदंडबाणार्ववर्गावसरवारिषु॥५१॥ स्याद्भांडमश्वाभरणेमंत्रेमूलव
णिग्धने॥ ॥इतिडांताः॥ ॥भृशप्रतिज्ञयोर्बादंप्रगाढंभृशकृच्छ्रयोः॥ शक्तस्थूलौत्रिषुदृढौव्यूढौविन्यस्तसंह
तौ॥५२॥ ॥इतिढांताः॥ ॥भ्रूणोऽर्भकेस्त्रैणगर्भेबाणोबलिसुतेशरे॥ कणोतिसूक्ष्मेधान्यांशेसंघातेप्रमथे-
गणः॥५३॥ पणोद्यूतादिषूत्सृष्टेभृतौमूल्येधनेपिच॥ मौर्व्यांद्रव्याश्रितेसत्वशौर्यसंध्यादिकेगुणः॥५४॥ निर्व्यापारस्थि
तौकालविशेषोत्सवयोःक्षणः॥ वर्णोद्विजादौशुक्लादौस्तुतौवर्णंतुवाक्षरे॥५५॥ अरुणोभास्करेपिस्याद्वर्णभेदेपिचत्रिषु
॥ स्थाणुःशर्वेपिचद्रोणःकाकेप्याजौरवेरणः॥५६॥ ग्रामणीर्नापितेपुंसिश्रेष्ठेग्रामाधिपेत्रिषु॥ऊर्णामेषादिलोम्निस्यादाव
र्तेचांतराभ्रुवोः॥५७॥ हरिणीस्यान्मृगीहेमप्रतिमाहरिताचया॥ त्रिषुपांडौचहरिणःस्थूणास्तंभेपिवेश्मनः॥५८॥ तृ
ष्णोस्पृहापिपासेद्वेजुगुप्साकरुणेघृणे॥ वणिक्पथेपिविपणिःसुराप्रत्यक्चवारुणी॥५९॥ करेणुरिभ्यांस्त्रीनेभेद्रविणं-
तुबलंधनं॥शरणंगृहरक्षित्रोःश्रीपर्णंकमलेपिच॥६०॥ विषाभिमरलोहेषुतीक्ष्णंक्लीबेखरेत्रिषु॥ प्रमाणंहेतुमर्यादाशा
स्त्रेयत्ताप्रमातृषु॥६१॥करणंसाधकतमंक्षेत्रगात्रेंद्रियेष्वपि॥ प्राण्युत्पादेसंसरणमसंबाधचमूगतौ॥६२॥ घंटापथेथ



सेतोस्त्ववरणोवेणीनदीवाहेकचोच्चये॥

यांतान्नेसमुद्धरणमुन्नये॥ अतस्त्रिषुविषाणंस्यात्पशुशृंगेभदंतयोः॥६३॥ प्रवणंक्रमनिम्नोर्व्यांप्रह्वेनातुचतुष्पथे॥ संकी
र्णौनिचिताशुद्धावीरणंशून्यमूषरं॥६४॥ ॥इतिणांताः॥ ॥देवसूर्यौविवस्वंतौसरस्वंतौनदार्णवौ॥ पक्षितार्क्ष्यौगरु
त्मंतौशकुंतौभासपक्षिणौ॥६५॥ अग्न्युत्पातौधूमकेतूजीमूतौमेघपर्वतौ॥ हस्तौतुपाणिनक्षत्रेमरुतौपवनामरौ॥६६॥ यंता
हस्तिपकेसूतेभर्ताधातरिपोष्टरि॥ यानपात्रेशिशौपोतःप्रेतःप्राण्यंतरेमृते॥६७॥ ग्रहभेदेध्वजेकेतुःपार्थिवेतनयेसुतः॥
स्थपतिःकारुभेदेपिभूभृद्भूमिधरेनृपे॥६८॥ मूर्द्धाभिषिक्तोभूपेपिऋतुःस्त्रीकुसुमेपिच॥ विष्णावप्यजिताव्यक्तौसूतस्त्व
ष्टरिसारथौ॥६९॥ व्यक्तःप्राज्ञेपिदृष्टांतावुभेशास्त्रनिदर्शने॥ क्षत्तास्यात्सारथौद्वाःस्थेक्षत्रियायांचशूद्रजे॥७०॥ वृत्तांतःस्या
त्प्रकरणेप्रकारेकार्त्स्न्यवार्तयोः॥आनर्तःसमरेनृत्यस्थाननीवृद्विशेषयोः॥७१॥ कृतांतोयमसिद्धांतदैवाकुशलकर्मसु॥
श्लेष्मादिरसरक्तादिमहाभूतानितद्गुणाः॥७२॥ इंद्रियाण्यश्मविकृतिःशब्दयोनिश्चधातवः॥ कक्षांतरेपिशुद्धांतोनृपस्यास
र्वगोचरे॥७३॥कासूसामर्थ्ययोःशक्तिर्मूर्तिःकाठिन्यकाययोः॥ विस्तारवल्त्योर्व्रततिर्वसतीरात्रिवेश्मनोः॥७४॥ क्षयार्चयोर
पचितिःसातिर्दानावसानयोः॥ आर्तिःपीडाधनुष्कोट्योर्जातिःसामान्यजन्मनोः॥७५॥प्रचारस्पंदयोरीतिरीतिर्डिंबप्रवासयोः
॥उदयेधिगमेप्राप्तिस्त्रेतात्वग्नित्रयेयुगे॥७६॥वीणाभेदेपिमहतीभूतिर्भस्मनिसंपदि॥ नदीनगर्योर्नागानांभोगवत्यथसंग

रे ॥ ७७ ॥ संगे सभायां समितिः क्षयवासावपि क्षिती ॥ रवेरर्चिश्च शस्त्रं च वन्हिज्वाला च हेतयः ॥ ७८ ॥ जगती जगति च्छंदो
विशेषेपि क्षितावपि ॥ पंक्तिश्छंदोपि दशमं स्यात्प्रभावेपि चायतिः ॥ ७९ ॥ पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः ॥ प्रकृति-
र्योनिलिंगे त्र कैशिक्याद्याश्च वृत्तयः ॥ ८० ॥ सिकताः स्युर्वालुकापि वेदे श्रवसि च श्रुतिः ॥ वनिता जनितात्यर्थानुरागायां च यो
षिति ॥ ८१ ॥ गुप्तिः क्षितिव्युदासेपि धृतिर्धारणधैर्ययोः ॥ बृहती क्षुद्रवार्ताकी छंदोभेदे महत्यपि ॥ ८२ ॥ वासिता स्त्रीकरि
ण्योश्च वार्ता वृत्तौ जनश्रुतौ ॥ वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृतामृते ॥ ८३ ॥ कलधौतं रूप्यहेम्नोर्निमित्तं हेतुलक्ष्मणोः ॥ श्रु
तं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतं ॥ ८४ ॥ अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ॥ युक्ते क्ष्मादावृते भूतं प्राण्यती
ते समे त्रिषु ॥ ८५ ॥ वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ॥ महद्राज्यं चावगीतं जन्ये स्याद्गर्हिते त्रिषु ॥ ८६ ॥ श्वेतं रूप्येपि
रजतं हेम्नि रूप्ये सिते त्रिषु ॥ त्रिष्वि[illegible]जगदिंगेपि रक्तं नील्यादिरागि च ॥ ८७ ॥ अवदातः सिते पीते शुद्धे बद्धार्जुनौ सितौ
॥ युक्तेति संस्कृतं मर्षिण्यभिनीतोथ संस्कृतं ॥ ८८ ॥ कृत्रिमे लक्षणोपेतेप्यनंतोनवधावपि ॥ ख्याते हृष्टे प्रतीतोभिजातस्तु
कुलजे बुधे ॥ ८९ ॥ विविक्तौ पूतविजनौ मूर्च्छितौ मूढसोच्छ्रयौ ॥ द्वौ चाम्लपुरुषौ शुक्लौ शितिर्धवलमेचकौ ॥ ९० ॥ सत्ये साधौ वि
द्यमाने प्रशस्तेभ्यर्हिते च सत् ॥ पुरस्कृतः पूजितेरात्यभियुक्तेग्रतः कृते ॥ ९१ ॥ निवातावाश्रयावातौ शस्त्राभेद्यं च वर्म यत् ॥ जातो

शास्त्रद्रविणयोर्ग्रंथः संस्था धारे स्थितौ मृतौ

न्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास्त्वमी ॥ ९२ ॥ वृद्धिमत्प्रोद्यतोत्पन्नौ आदृतौ सादरार्चितौ ॥ ॥ इति तांताः ॥ ॥ अर्थोभिधे
यरैवस्तुप्रयोजननिवृत्तिषु ॥ ९३ ॥ निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ ॥ समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हितेपि च ॥ ९४ ॥
दशमीस्थौ क्षीणरागवृद्धौ वीथी पदव्यपि ॥ आस्थानी यत्नयोरास्था प्रस्थोस्त्री सानुमानयोः ॥ ९५ ॥ ॥ इति थांताः ॥ ॥
अभिप्रायवशौ छंदावब्दौ जीमूतवत्सरौ ॥ अपवादौ तु निंदाज्ञे दायादौ सुतबांधवौ ॥ ९६ ॥ पादा रश्म्यंघ्रितुर्यांशाश्चंद्राग्न्यर्का
स्तमोनुदः ॥ निर्वादो जनवादेपि शादो जंबालशष्पयोः ॥ ९७ ॥ आरावे रुदिते त्रातर्याक्रंदो दारुणे रणे ॥ स्यात्प्रसादोनुरागे
पि सूदः स्याद्व्यंजनेपि च ॥ ९८ ॥ गोष्ठाध्यक्षेपि गोविंदो हर्षेप्यामोदवन्मदः ॥ प्राधान्ये राजलिंगे च वृषांगे ककुदोस्त्रियां
॥ ९९ ॥ स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ॥ धर्मे रहस्युपनिषत्स्यादृतौ वत्सरे शरत् ॥ १०० ॥ पदं व्यवसितित्राणस्था
नलक्ष्मांघ्रिवस्तुषु ॥ गोष्पदं सेविते माने प्रतिष्ठाकृत्यमास्पदं ॥ १ ॥ त्रिष्विष्टमधुरौ स्वादू मृदू चातीक्ष्णकोमलौ ॥ मूढाल्पापटुनि
र्भाग्या मंदाः स्युर्द्वौ तु शारदौ ॥ २ ॥ प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ ॥ ॥ इति दांताः ॥ ॥ व्यामो वटश्च न्यग्रोधा
वुत्सेधः कायउन्नतिः ॥ ३ ॥ पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ ॥ परिधिर्यज्ञियतरोः शाखायामुपसूर्यके ॥ ४ ॥ बंधकं
व्यसनं चेतः पीडाधिष्ठानमाधयः ॥ स्युः समर्थननीवाकनियमाश्च समाधयः ॥ ५ ॥ दोषोत्पादेनुबंधः स्यात्प्रकृत्यादिषु नश्वरे

॥ मुख्यानुयायिनिशिशौ प्रकृतस्यानुवर्तने ॥ ६ ॥ विधुर्विष्णौ चंद्रमसि परिच्छेदे बिलेवधिः ॥ विधिर्विधाने दैवेपि प्रणिधिः प्रा
र्थने चरे ॥ ७ ॥ बुधवृद्धौ पंडिते पि स्कंधः समुदयेपि च ॥ देशे नदविशेषेब्धौ सिंधुर्ना सरिति स्त्रियां ॥ ८ ॥ विधा विधौ प्रकारे च
साधू रम्येपि च त्रिषु ॥ वधूर्जाया स्नुषा स्त्री च सुधा लेपोमृतं स्नुही ॥ ९ ॥ संधा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा ॥ मधु
मद्ये पुष्परसे क्षौद्रेप्यंधं तमस्यपि ॥ १० ॥ अतस्त्रिषु समुन्नद्धौ पंडितंमन्यगर्वितौ ॥ ब्रह्मबंधुरधिक्षेपे निर्देशे थाविलंबितः ॥ ११
॥ अविदूरोप्यवष्टब्धौ प्रसिद्धौ ख्यातभूषितौ ॥ ॥ इति धांताः ॥ ॥ सूर्यवन्ही चित्रभानू भानू रश्मिदिवाकरौ ॥ भूतात्मा
नौ धातृदेहौ मूर्खनीचौ पृथग्जनौ ॥ १२ ॥ ग्रावाणौ शैलपाषाणौ पत्रिणौ शरपक्षिणौ ॥ तरुशैलौ शिखरिणौ शिखिनौ वन्हिबर्हि
णौ ॥ १३ ॥ प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ ॥ द्वौ सारथिहयारोहौ वाजिनोश्वेषुपक्षिणः ॥ १४ ॥ कुलेप्यभिजनो जन्म
भूम्यामप्यथ हायनाः ॥ वर्षार्चिर्व्रीहिभेदाश्चंद्राग्न्यर्का विरोचनाः ॥ १५ ॥ केशेपि वृजिनो विश्वकर्मार्कसुरशिल्पिनोः ॥ आत्मा
यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च ॥ १६ ॥ शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघनः ॥ अभिमानोर्थादिदर्पे ज्ञाने प्रणयहिंस
योः ॥ १७ ॥ घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरंतरे ॥ इनः सूर्ये प्रभौ राजा मृगांके क्षत्रिये नृपे ॥ १८ ॥ वाणिन्यौ नर्तकीदूत्यौ स्रवंत्याम
पि वाहिनी ॥ ह्रादिन्यौ वज्रतडितौ वंदायामपि कामिनी ॥ १९ ॥ त्वग्देहयोरपि तनुः सूनाधोजिह्विकापि च ॥ क्रतुविस्तारयोरस्त्री



वितानं त्रिषु तुच्छके ॥ १२० ॥ मंदे ध्वजे केतनं कृत्ये केतावुपनिमंत्रणे ॥ वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ॥ २१ ॥
उत्साहने च हिंसायां सूचने पि च गंधनं ॥ आतंचनं प्रतीवापजवनाप्यायनार्थकं ॥ २२ ॥ व्यंजनं लांछनं श्मश्रु निष्ठानावयवे
ष्वपि ॥ स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणां ॥ २३ ॥ स्यादुद्यानं निःसरणे वनभेदे प्रयोजने ॥ अवकाशे स्थितौ स्था
नं क्रीडादावपि देवनं ॥ २४ ॥ उत्थानं पौरुषे तंत्रे सन्निविष्टोद्गमेपि च ॥ व्युत्थानं प्रतिरोधे च विरोधाचरणेपि च ॥ १२५ ॥
मारणे मृतसंस्कारे गतौ द्रव्येर्थदापने ॥ निर्वर्तनोपकरणानुव्रज्यासु च साधनं ॥ २६ ॥ निर्यातनं वैरशुद्धौ दाने न्यासार्पणेपि
च ॥ व्यसनं विपदि भ्रंशे दोषे कामजकोपजे ॥ २७ ॥ पक्ष्माक्षिलोम्नि किंजल्के तंत्वाद्यंशेप्यणीयसि ॥ तिथिभेदे क्षणे
पर्व वर्त्म नेत्रच्छदे ध्वनि ॥ २८ ॥ अकार्यगुह्ये कौपीनं मैथुनं संगतौ रतौ ॥ प्रधानं परमात्मा धीः प्रज्ञानं बुद्धिचिन्हयोः ॥
॥ २९ ॥ प्रसूनं पुष्पफलयोर्निधनं कुलनाशयोः ॥ क्रंदने रोदनाह्वाने वर्ष्म देहप्रमाणयोः ॥ १३० ॥ गृहदेहत्विट्प्रभावा धा
मान्यथ चतुष्पथे ॥ सन्निवेशे च संस्थानं लक्ष्म चिन्हप्रधानयोः ॥ ३१ ॥ आच्छादने संपिधानमपवारणमित्युभे ॥ आ
राधनं साधने स्यादवाप्तौ तोषणेपि च ॥ ३२ ॥ अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ॥ रत्नं स्वजातिश्रेष्ठेपि वने सलिल
कानने ॥ ३३ ॥ तलिनं विरले स्तोके वाच्यलिंगस्तथोत्तरे ॥ समानाः सत्समैकेस्युः पिशुनौ खलसूचकौ ॥ ३४ ॥ हीनन्यू

नावूनगत्यौवेगिभूरोतरस्विनौ ॥ अभिपन्नौपराग्रस्तैः भिग्रस्तेव्यापद्गतावपि ॥ ३५॥ ॥ इतिनांताः ॥ ॥ कलापोभूषणेबर्हेतूणीरेसंहतेपि ॥ परिच्छेदेपरीवापः पर्युप्तौसलिलस्थितौ ॥ ३६॥ गोधुग्गोष्ठपतीगोपौ हरिविष्णूवृषाकपी ॥ बाष्पमूष्माश्रुकशिपुत्वन्नमाच्छादनंद्वयं ॥ ३७ ॥ तल्पंशय्याट्टदारेषुस्तंबेपिविटपोस्त्रियां॥ प्राप्तरूपस्वरूपाभिरूपाबुधमनोज्ञयोः ॥ ३८ ॥ भेद्यलिंगाअमीकूर्मीवीणाभेदश्चकच्छपी॥ ॥ इतिपांताः॥ ॥ रवर्णेपुंसिरेफः स्यात्कुत्सितेवाच्यलिंगकः ॥ ३९॥ ॥ इतिफांताः ॥ ॥ अंतराभवसत्वेश्वेगंधर्वोदिव्यगायने ॥ कंबुर्नावलयेशंखेद्विजिह्वौसर्पसूचकौ ॥ ४०॥ पूर्वोन्यलिंगः प्रागाहपुंबहुत्वेपिपूर्वजान्॥ ॥इतिबांताः॥ ॥ कुंभौघटेभमूर्धांशौडिंभौतुशिशुबालिशौ ॥ ४१॥ स्तंभौस्थूणाजडीभावौशंभूब्रह्मत्रिलोचनौ ॥ कुक्षिभ्रूणार्भकागर्भाविस्रंभः प्रणयेपिच ॥ ४२॥ स्याद्भेर्यांदुंदुभिः पुंसिस्यादक्षेदुंदुभिः स्त्रियां॥ स्यान्महारजनेक्लीबंकुसुंभंकरकेपुमान्॥ ४३॥ क्षत्रियेपिचनाभिर्नासुरभिर्गंधिचस्त्रियाम्॥ सभासंसादिसभ्येचत्रिष्वध्यक्षेपिवल्लभः ॥ ४४॥ ॥ इतिभांताः ॥ ॥ किरणप्रग्रहौरश्मीकपिभेकौप्लवंगमौ ॥ इच्छामनोभवौकामौशौर्योद्योगौपराक्रमौ ॥ ४५॥ धर्माःपुण्ययमन्यायस्वभावाचारसोमपाः॥ उपायपूर्वआरंभउपधाचाप्युपक्रमः ॥ ४६॥ वणिक्पथःपुरंवेदोनिगमोनाग

उष्णेपिघर्मश्चैवेशल्लंकारे भ्रांतौचविभ्रमः॥

रोवणिक् ॥ नैगमौद्वौबलेरामोनीलचारुसितेत्रिषु ॥ ४७॥ शब्दादिपूर्वोवृंदेपिग्रामः क्रांतौचविक्रमः ॥ स्तोमः स्तोत्रेध्वरेवृंदेजिह्मस्तुकुटिलेलसे ॥ ४८ ॥ गुल्मारुक्स्तंबसेनाश्चजामिःस्वसृकुलस्त्रियोः॥ क्षितिक्षांत्योः क्षमायुक्तेक्षमंशक्तेहितेत्रिषु ॥ ४९॥ त्रिषुश्यामौहरित्कृष्णौश्यामास्याच्छारिवानिशा ॥ ललामंपुच्छपुंड्राश्वभूषाप्राधान्यकेतुषु ॥ ५०॥ सूक्ष्ममध्यात्ममप्याद्येप्रधानेप्रथमेथत्रिषु ॥ वामौवल्गुप्रतीपौद्वावधमौन्यूनकुत्सितौ ॥ ५१॥ - जीर्णंचपरिभुक्तंचयातयाममिदंद्वयं॥ ॥ इतिमांताः॥ ॥ तुरंगगरुडौतार्क्ष्यौनिलयापचयौक्षयौ ॥ ५२॥ श्वशुर्यौदेवरश्यालौभ्रातृव्यौभ्रातृजद्विषौ ॥ पर्जन्यौरसदब्देंद्रौस्यादर्यः स्वामिवैश्ययोः ॥ ५३॥ तिष्यः पुष्येकलियुगेपर्यायोवसरेक्रमे ॥ प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु ॥ ५४॥ रंध्रेशब्देथानुशयोदीर्घद्वेषानुतापयोः॥ स्थूलोच्चयस्त्वसाकल्येनागानांमध्यमेगते ॥ ५५॥ समयाः शपथाचारकालसिद्धांतसंविदः॥ व्यसनान्यशुभंदैवंविपदित्यनयास्त्रयः ॥ ५६॥ अत्ययोतिक्रमेकृच्छ्रेदोषेदंडेप्यथापदि ॥ युद्धायत्योः संपरायः पूज्यस्तुश्वशुरेपिच ॥ ५७॥ पश्चादवस्थायिबलंसमवायश्चसन्नयौ ॥ संघातेसन्निवेशेचसंस्त्यायः प्रणयास्त्वमी ॥ ५८ ॥ विस्रंभयाञ्चाप्रेमाणोविरोधेपिसमुच्छ्रयः॥ विषयोयस्ययोज्ञातस्तत्रशब्दादिकेष्वपि ॥ ५९॥ निर्यासेपिकषायो

स्त्रीसभायांच प्रतिश्रयः॥ प्रायोभूम्न्यंतगमने मन्युर्दैन्येक्रतौक्रुधि॥ ६०॥ रहस्योपस्थयोर्गुह्यं सत्यंशपथतथ्ययोः॥
वीर्यंबले प्रभावेच द्रव्यंभव्येगुणाश्रये॥ १६१॥ धिष्ण्यंस्थानेगृहेभेग्नौ भाग्यंकर्मशुभाशुभं॥ कशेरुहेम्नोर्गांगेयंवि
शल्यादंतिकापिच॥ ६२॥ वृषाकपायीश्रीगौर्योरभिख्यानामशोभयोः॥ आरंभोनिष्कृतिः शिक्षापूजनं संप्रधार-
णम्॥ ६३॥ उपायः कर्मचेष्टाच चिकित्साचनवक्रियाः॥ छायासूर्यप्रियाकांतिः प्रतिबिंबमनातपः॥ ६४॥ कक्ष्या
प्रकोष्ठेहर्म्यादेः कांच्यांमध्येभबंधने॥ कृत्याक्रियादेवतयोस्त्रिषुभेद्येधनादिभिः॥ १६५॥ जन्यं स्याज्जनवादेपिज
घन्योंत्येधमेपिच॥ गर्त्याधीनौचवक्तव्यौ कल्यौसज्जनिरामयौ॥ ६६॥ आत्मवाननपेतोर्थादर्थ्यौपुण्यंतुचार्वपि॥ रू
प्यंप्रशस्तरूपेपि वदान्योवल्गुवागपि॥ ६७॥ न्यायेपिमध्यः सौम्यंतु सुंदरेसोमदैवते॥ ॥ इतियांताः॥ ॥
निवहावसरौवारौ संस्तरौप्रस्तराध्वरौ॥ ६८॥ गुरूगीष्पतिपित्राद्यौद्वापरौयुगसंशयौ॥ प्रकारौभेदसादृश्ये आकारा
विंगिताकृती॥ ६९॥ किंशारुसस्यशूकेषु मरूधन्वधराधरौ॥ अद्रयोद्रुमशैलार्काः स्त्रीस्तनाब्दौपयोधरौ॥ १७०॥ ध्वां
तारिदानवावृत्रा बलिहस्तांशवः कराः॥ प्रदराभंगनारीरुक्बाणा अस्त्राः कचाअपि॥ ७१॥ अजातशृंगोगौः काले-
प्यश्मश्रुर्नाचतूबरौ॥ स्वर्णेपिराः परिकरः पर्यंकपरिवारयोः॥ ७२॥ मुक्ताशुद्धौचतारः स्याच्छारोवायौसतुत्रिषु॥-



कर्बुरेऽथप्रतिज्ञाजिसंविदापत्सुसंगरः॥ ७३॥ वेदभेदेगुप्तवादे मंत्रोमित्रोरवावपि॥ मखवेषुयूपखंडेपि स्वरुर्गुह्येप्यव
स्करः॥ ७४॥ आडंबरस्तूर्यरवेगजेंद्राणांचगर्जिते॥ अभिहारोभियोगेच चौर्येसन्नहनेपिच॥ १७५॥ स्याज्जंगमेपरी-
वारः खड्गकोशेपरिच्छदे॥ विष्टरोविटपीदर्भमुष्टिः पीठाद्यमासनम्॥ ७६॥ द्वारिद्वास्थेप्रतीहारः प्रतीहार्यप्यनंतरे॥ वि
पुलेनकुलेविष्णौ बभ्रु[illegible]र्ना क्लिंगलेत्रिषु॥ ७७॥ सारोबलेस्थिरांशेच न्याय्येक्लीबंवरेत्रिषु॥ दुरोदरोद्यूतकारेपणेद्यूते
दुरोदरम्॥ ७८॥ महारण्येदुर्गपथे कांतारंपुन्नपुंसकम्॥ मत्सरोन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु॥ ७९॥ देवाद्वृतेवरः
श्रेष्ठेत्रिषुक्लीबंमनाक्प्रिये॥ वंशांकुरेकरीरोस्त्री तरुभेदेघटेचना॥ १८०॥ नाचमूजघनेहस्तसूत्रेप्रतिसरोस्त्रियाम्
॥ यमानिलेंद्रचंद्रार्कविष्णुसिंहांशुवाजिषु॥ ८१॥ शुकाहिकपिभेकेषु हरिर्नाकपिलेत्रिषु॥ शर्करार्परकरांशेपिया
त्रास्याद्यापनेगतौ॥ ८२॥ इराभूवाक्सुराप्सु स्यात्तंद्रीनिद्राप्रमीलयोः॥ धात्रीस्यादुपमातापि क्षितिरप्यामलक्यपि
पि॥ ८३॥ क्षुद्राव्यंगानटीवेश्यासरघाकंटकारिका॥ त्रिषुक्रूरेऽधमेल्पेपि क्षुद्रंमात्रापरिच्छदे॥ ८४॥ अल्पे-
चपरिमाणेसामात्रंकार्त्स्न्येवधारणे॥ आलेख्याश्चर्ययोश्चित्रं कलत्रंश्रोणिभार्ययोः॥ १८५॥ योग्यभाजनयोः
पात्रंपत्रंवाहनपक्षयोः॥ निर्देशग्रंथयोः शास्त्रं शस्त्रमायुधलोहयोः॥ ८६॥ स्याज्जटांशुकयोर्नेत्रं क्षेत्रंपत्नीश

रीरयोः॥ मुखाग्रेक्रोडहलयोः पोत्रंगोत्रंतुनाम्निच ॥८७॥ सत्रमाच्छादनेयज्ञेसदादानेवनेपिच॥ अजिरंविषये-
कायेप्यंबरंव्योम्निवाससि॥ ८८॥ चक्रंराष्ट्रेप्यक्षरंतुमोक्षेपिक्षीरमप्सुच॥ स्वर्णेपिभूरिचंद्रौद्वौद्वारमात्रेपिगोपुरं॥
८९॥ गुहादंभौगह्वरेद्वेरहोंतिकमुपह्वरे ॥पुरोधिकमुपर्यग्राण्यगारेनगरेपुरम् ॥१९०॥ मंदिरंचाथराष्ट्रोस्त्रीवि-
षयेस्यादुपद्रवे॥ दरोऽस्त्रियांभयेश्वभ्रेवज्रोऽस्त्रीहीरकेपवौ ॥९१॥ तंत्रंप्रधानेसिद्धांतेसूत्रवायेपरिच्छदे॥ औ-
शीरंचामरेदंडेप्यौशीरंशयनासने ॥१९२॥ पुष्करंकरिहस्ताग्रेवाद्यभांडमुखेजले॥ व्योम्निखड्गफलेपद्मेतीर्थौष-
धिविशेषयोः॥९३॥ क्लीबेरेतसिशुक्रोनाभार्गवश्रेष्ठवन्हिषु॥ अंतरमवकाशावधिपरिधानांतर्द्धिभेदतादर्थ्ये ॥९४॥ छि-
द्रात्मीयविनाबहिरवसरमध्येंतरात्मनिच॥ मुस्तेपिपिठरंराजकसेरुण्यपिनागरं॥१९५॥ शार्वरंत्वंधतमसेघातुकेभेद्य-
लिंगकः॥ गौरोरुणेसितेपीतेव्रणकार्येप्यरुष्करः॥९६॥ जठरःकठिनेपिस्यादधस्तादपिचाधरः॥९७॥ अनाकुलेपि
चैकाग्रोव्यग्रोव्यासक्तआकुले॥ उपर्युदीच्यश्रेष्ठेष्वप्युत्तरःस्यादनुत्तरः॥९८॥ एषांविपर्ययेश्रेष्ठेदूरानात्मोत्तमाःपराः
॥ स्वादुप्रियौतुमधुरौक्रूरौकठिननिर्दयौ॥९९॥ उदारोदातृमहतोरितरस्त्वन्यनीचयोः॥ मंदस्वच्छंदयोःस्वैरःशुभ्रमु-
द्दीप्तशुक्लयोः॥२००॥ ॥ इति[illegible]ताः॥ ॥ चूडाकिरीटंकेशाश्चसंयतामौलयस्त्रयः॥ द्रुमभेदेपिमातंग

रां प्रभेद





कांडपुष्पाणिपीलवः ॥१॥ कृतांतानेहसोःकालश्चतुर्थेपियुगेकलिः॥ स्यात्कुरंगेपिकमलःप्रावारेपिचकंबलः॥२॥
करोपहारयोःपुंसिबलिःप्राण्यंगजेस्त्रियां॥ स्थौल्यसामर्थ्यसैन्येषुबलंनाकाकसीरिणोः॥३॥ वातूलःपुंसिवात्यायाम
पिवातासहेत्रिषु॥ भेद्यलिंगःशठेव्यालःपुंसिश्वापदसर्पयोः॥४॥ मलोऽस्त्रीपापविट्किट्टान्यस्त्रीशूलंरुगायुधं॥
शंकावपिद्वयोःकीलःपालिस्त्र्यश्र्यंकपंक्तिषु॥५॥ कलाशिल्पेकालभेदेप्यालीसख्यावलीअपि॥ अब्ध्यंबुविकृतौवे-
लाकालमर्यादयोरपि॥६॥ बहुलाःकृत्तिकागावोबहुलोग्नौशितौत्रिषु॥ लीलाविलासक्रिययोरुपलाशर्करापिच॥
॥७॥ शोणितेंभसिकीलालंमूलमाद्येशिफाभयोः॥ जालंसमूहआनायगवाक्षक्षारकावपि॥८॥ शीलंस्वभावेस-
द्वृत्ते सस्येहेतुकृतेफलं॥ छर्दिर्नेत्ररुजोःक्लीबंसमूहेपटलंनना॥९॥ और्वानलेपिपातालंचैलंवस्त्रेधमेत्रिषु॥ अ-
धःस्वरूपयोरस्त्रीतलंस्याच्चामिषेफलम्॥२१०॥ कुकूलंशंकुभिःकीर्णेश्वभ्रेनातुतुषानले॥ निर्णीतेकेवलमितित्रि-
लिंगंत्वेककृत्स्नयोः॥११॥ पर्याप्तिक्षेमपुण्येषुकुशलंशिक्षितेत्रिषु॥ प्रवालमंकुरेप्यस्त्रीत्रिषुस्थूलंजडेपिच॥१२॥
करालोदंतुरेतुंगेचारोदक्षेपिपेशलः॥ मूर्खेऽर्भकेपिबालःस्याल्लोलश्चलसतृष्णयोः॥११३॥ ॥इतिलांताः॥
॥ दवदावौवनारण्यवन्हीजन्महरौभवौ॥ मंत्रीसहायःसचिवौपतिशाखिनराधवाः॥१४॥ अवयःशैलमेषा

र्या आज्ञाह्वानाध्वरा हवाः॥ भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु॥ २१५॥ स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोच
ने॥ अविश्वासे पन्हवेपि निकृतावपि निन्हवः॥ १६॥ उत्सेकामर्षयोरिच्छाप्रसवे महउत्सवः॥ अनुभावः प्रभावे च स-
तां च मतिनिश्चये॥ १७॥ स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धये॥ शूद्रायां विप्रतनये शस्त्रे पारशवः पुमान्॥ १८॥
ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु॥ स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने॥ १९॥ स्त्रीकटीवस्त्रबंधे
पि नीवी परिपणेपि च॥ शिवा गौरी फेरवयोर्द्वंद्वं कलहयुग्मयोः॥ २२०॥ द्रव्यासुव्यवसायेषु सत्वमस्त्री तु जंतुषु॥ क्ली
बं नपुंसकं षंढे वाच्यलिंगमविक्रमे॥ २१॥ द्वौ विशौ वैश्यमनुजौ द्वौ चराभिमर्शौ स्पर्शौ॥ द्वौ राशी पुंजमेषाद्यौ द्वौ वंशौ कुलम
स्करौ॥ २२॥ रहः प्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः॥ कृतांते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु॥ २३॥ पदे लक्ष्ये नि
मित्तेपदेशः स्यात्कुशमप्सु च॥ दशावस्थानेकविधाप्याशा तृष्णापि चायता॥ २४॥ वशा स्त्री करिणी च स्याद्दृग्ज्ञाने ज्ञा-
तरि त्रिषु॥ स्यात्कर्कशः साहसिकः कठोरामसृणावपि॥ २२५॥ प्रकाशोतिप्रसिद्धेपि शिशावज्ञे च बालिशः॥ ॥
इति शांताः॥ ॥ सुरमत्स्यावनिमिषौ पुरुषावात्ममानवौ॥ २६॥ काकमत्स्यात्खगौ ध्वांक्षौ कुक्षौ तु तृणवीरुधौ
अभीषुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने॥ २७॥ पक्षः सहायेप्युष्णीषः शिरोवेष्टकिरीटयोः॥ शुक्रले मूषिके श्रेष्ठे सुकृ



ते वृषभे वृषः॥ २८॥ कोशोस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः॥ द्यूतेक्षे शारिफलके प्याकर्षोथाक्षमिंद्रिये॥ २९॥
नाद्यूतांगे कर्षचक्रे व्यवहारे कलिद्रुमे॥ कर्षूर्वार्ता करीषाग्निः कर्षूः कुल्याभिधायिनी॥ २३०॥ पुंभावे तत्क्रियायां च
पौरुषं विषमप्सु च॥ उपादानेप्यामिषं स्यादपराधेपि किल्बिषं॥ ३१॥ स्याद्दृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियां॥ प्रे
क्षा नृत्येक्षणं प्रज्ञा भिक्षा सेवार्थना भृतिः॥ ३२॥ त्विट् शोभापि त्रिषु परेन्यक्षं कार्त्स्न्ये निकृष्टयोः॥ प्रत्यक्षेधिकृतेध्यक्षो
रूक्षस्त्वप्रेम्ण्यचिक्कणे॥ ३३॥ ॥ इति षांताः॥ ॥ रविश्वेतच्छदौ हंसौ सूर्यवन्ही विभावसू॥ वत्सौ तर्ण
कवर्षौ द्वौ सारंगाश्च दिवौकसः॥ ३४॥ शृंगारादौ विषे वीर्ये गुणे रागे द्रवे रसः॥ पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेपि शेखरे
॥ २३५॥ देवभेदेनले रश्मौ वसू रत्ने धने वसु॥ विष्णौ च वेधाः स्त्री त्वाशीर्हिताशंसाहिदंष्ट्रयोः॥ ३६॥ लालसे प्रार्थनौ
त्सुक्ये हिंसा चौर्यादिकर्म च॥ प्रसूरश्वापि भूर्द्यावौ रोदस्यौ रोदसी च ते॥ ३७॥ ज्वालाभासोर्न पुंस्यर्चिर्ज्योतिर्भद्यो
तदृष्टिषु॥ पापापराधयो रागः स्वगबाल्यादिनोर्वयः॥ ३८॥ तेजः पुरीषयोर्वर्चो महः स्तूत्सवतेजसोः॥ रजो गुणे च
स्त्रीपुष्पे राहौ ध्वांते गुणे तमः॥ ३९॥ छंदः पद्येभिलाषे च तपः कृच्छ्रादिकर्म च॥ सहो बलं सहा मार्गो नभः खं श्राव
णो नभाः॥ २४०॥ ओकः सद्माश्रयश्चौकाः पयः क्षीरं पयोंबु च॥ ओजो दीप्तौ बले स्रोत इंद्रियेनिम्नगारये॥ ४१

॥ तेजःप्रभावे दीप्तौ च बले शुक्रेप्यतस्त्रिषु ॥ विद्वान्विदंश्च बीभत्सो हिंस्रोप्यतिशये त्वमी ॥ ४२॥ वृद्धप्रशस्ययोर्ज्यायान्कनीयांस्तु युवाल्पयोः ॥ वरीयांस्तूरुवरयोः साधीयान्साधुबाढयोः ॥२४३॥ ॥ इति सांताः ॥ ॥ दलेपि बर्हे निर्बंधोपरागार्कादयो ग्रहाः ॥ द्वार्यापीडे क्वाथरसे निर्व्यूहो नागदंतके ॥ ४४॥ तुलासूत्रेश्वादिरश्मौ प्रग्राहः प्रग्रहोपि च ॥ पत्नीपरिजनादानमूलशापाः परिग्रहाः ॥२४५॥ दारेषु च गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः ॥ व्यूहो वृंदेप्यहिर्वृत्रेप्यग्नींदर्कास्तमोपहाः ॥ परिच्छदे नृपार्हेर्थे परिबर्होव्ययाः परे ॥ २४६॥ ॥ इति हांताः ॥ ॥

आङीषदर्थेभिव्याप्तौ सीमार्थे धातुयोगजे ॥ आ प्रगृह्यः स्मृतौ वाक्येप्यास्तु स्यात्कोपपीडयोः ॥ १॥ पापकुत्सेषदर्थे कु धिङ्निर्भर्त्सननिंदयोः ॥ चान्वाचयसमाहारेतरेतरसमुच्चये ॥२॥ स्वस्त्याशीःक्षेमपुण्यादौ प्रकर्षे लंघनेप्यति ॥ स्वित्प्रश्ने च वितर्के च तु स्याद्भेदेवधारणे ॥३॥ सकृत्सहैकवारे स्यादाराद्दूरसमीपयोः ॥ प्रतीच्यां चरमे पश्चादुताप्यर्थविकल्पयोः ॥४॥ पुनः सहार्थयोः शश्वत्साक्षात्प्रत्यक्षतुल्ययोः ॥ खेदानुकंपासंतोषविस्मयामंत्रणे बत ॥५॥ हंत हर्षेनुकंपायां वाक्यारंभविषादयोः ॥ प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगतः ॥ ६॥ इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ॥ प्राच्यां पुरस्तात्प्रथमे पुरार्थेग्रत इत्यपि ॥ ७॥ यावत्तावच्च साकल्येऽवधौ मानेवधारणे ॥ मंगलानंतरारंभप्रश्नकार्त्स्न्येष्वथो अथ ॥ ८॥ वृथा निरर्थकाविध्योर्नानानेकोभयार्थयोः ॥ नु पृच्छायां वितर्के च पश्चात्सादृश्ययोरनु ॥ ९॥ प्रश्नावधारणानुज्ञानुनयामंत्रणे ननु ॥ गर्हासमुच्चयप्रश्नशंकासंभावनास्वपि ॥१०॥ उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते ॥ अमा सह समीपे च कं वारिणि च मूर्धनि ॥ ११॥ इवेत्थमर्थयोरेवं नूनं तर्केर्थनिश्चये ॥ तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने ॥ १२॥ नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ॥ १३॥ हुं वितर्के परिप्रश्ने समयांतिकमध्ययोः ॥ पुनरप्रथमे भेदे निर्निश्चयनिषेधयोः ॥१४॥ स्यात्प्रबंधे चिरातीते निकटागामिके पुरा ॥ ऊर्य्युरी चोररी च विस्तारेंगीकृतौ त्रयम् ॥ १५॥ स्वर्गे परे च लोके स्वर्वार्तासंभाव्ययोः किल ॥ निषेधवाक्यालंकारजिज्ञासानुनये खलु ॥ १६॥ समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः ॥ नामप्राकाश्ययोः प्रादुर्मिथोन्योन्यं रहस्यपि ॥ १७॥ तिरोंतर्धौ तिर्यगर्थे हा विषादशुगर्तिषु ॥ अहहेत्यद्भुते खेदे हि हेताववधारणे ॥ १८॥ ॥ इति नानार्थवर्गः ॥ ॥ चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ॥ मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः ॥ १९॥ स्राक् झटित्यंजसान्हाय द्राङ्मंक्षु सपदि द्रुते ॥ बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥ २०॥ पृथग्विनांतरेणर्ते हिरुङ्नाना च वर्जने ॥ यत्तद्यतस्ततो हेतावसा

कल्पेतु चिच्चन ॥२१॥ कदाचिज्जातु सार्धंतु साकं सत्रा समं सह ॥ आनुकूल्यार्थकं प्राध्वं व्यर्थके तु वृथा मुधा ॥२२
॥ आहो उताहो किमुत विकल्पे किं किमूत च ॥ तु हि च स्म ह वै पादपूरणे पूजने स्वति ॥२३॥ दिवान्हीत्यथ दोषा च न
क्तं च रजनावपि ॥ तिर्यगर्थे साचि तिरोऽप्यथ संबोधनार्थकाः ॥२४॥ स्युः प्याट् पाडंग हे है भोः समया निकषा हिरुक्
॥ अतर्किते तु सहसा स्यात्पुरः पुरतोऽग्रतः ॥२५॥ स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा ॥ किंचिदीषन्मना
गल्पे प्रेत्यामुत्र भवांतरे ॥२६॥ व[illegible] यथा तथा चैवं साम्ये हो ही ति विस्मये ॥ मौने च तूष्णीं तूष्णीकं सद्यः सपदि तत्क्ष
णे ॥२७॥ दिष्ट्या समुपजोषं चेत्यानंदेऽथांतरेंतरा ॥ अंतरेण च मध्ये स्युः प्रसह्य तु हठार्थकं ॥२८॥ युक्ते द्वे सांप्रतं-
स्थाने ऽभीक्ष्णं शश्वदनारते ॥ अभावे नह्यनो नापि मा स्म मालं च वारणे ॥२९॥ पक्षांतरे चेद्यदि च तत्वे त्वद्धांज
साद्वयम् ॥ प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते ॥३०॥ समंततस्तु परितः सर्वतो विष्वगित्यपि ॥ अकामानु
मतौ काममसूयोपगमेऽस्तु च ॥३१॥ ननु च स्याद्विरोधोक्तौ कच्चित्कामप्रवेदने ॥ निःषमं दुःषमं गर्ह्ये यथास्वं तु य
थायथम् ॥३२॥ मृषा मिथ्या च वितथे यथार्थं तु यथातथम् ॥ स्युरेवं तु पुनर्वै वेत्यवधारणवाचकाः ॥३३॥ प्राग
तीतार्थकं नूनमवश्यं निश्चये द्वयम् ॥ संवद्वर्षे वरे त्वर्वागामेवं स्वयमात्मना ॥३४॥ अल्पे नीचैर्महत्युच्चैः प्रायो



भूम्न्यद्रुते शनैः ॥ सना नित्ये बहिर्बाह्ये स्मातीते ऽस्तमदर्शने ॥३५॥ अस्ति सत्वे रुषोक्तावुं ऊं प्रश्ने ऽनुनये त्वयि ॥ -
हुं तर्के स्यादुषा रात्रेरवसाने नमो नतौ ॥३६॥ पुनरर्थेंऽग निंदायां दुष्ठु सुष्ठु प्रशंसने ॥ सायं सायं प्रगे प्रातः प्रभाते निकषांतिके ॥३९॥ परुत्परार्यैषमोऽब्दे पूर्वे पूर्वेत
रेद्यति ॥ उभयद्युश्चोभयेद्युः परे त्वह्नि परेद्यवि ॥४०॥ ह्योगते नागते ऽन्हि श्वः परश्वस्तु परेऽहनि ॥ तदा तदानीं युग
पदेकदा सर्वदा सदा ॥४१॥ एतर्हि संप्रतीदानीमधुना सांप्रतं तथा ॥ दिग्देशकाले पूर्वादौ प्रागुदक्प्रत्यगादयः ॥
॥४२॥ ॥ इत्यव्ययवर्गः ॥ ॥ सलिंगशास्त्रैः सन्नादिकृत्तद्धितसमासजैः ॥ अनुक्तैः संग्रहे लिंगं सं-
कीर्णवदिहोन्नयेत् ॥१॥ लिंगशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ॥ स्त्रियामीदूद्विरामैकाक्षरं सयोनि प्राणिना
म च ॥२॥ नाम विद्युन्निशा वल्ली वीणा दिग्भू नदी ह्रियाम् ॥ अदंतैर्द्विगुरेकार्थो न स पात्रयुगादिभिः ॥३॥ तल्वं-
दे यनिकव्यत्रा वेरमैथुनिकादिवुन् ॥ स्त्रीभावादावक्तिन्ण्वुल्[illegible]णच्ण्वुच्क्यप्युजिञ्ङ्निशाः ॥४॥ उणादिषु-
निरूरीश्चिङ्याबूङ्ंतं चलं स्थिरम् ॥ तत्क्रीडायां प्रहरणं चेन्मौष्टा पाल्लवा णादिक् ॥५॥ घञो ञः सा क्रियास्यांचेद्दां

अ॰को॰
५२

डपात्ताहि फाल्गुनी ॥ श्येनंपाताच मृगयाँ तैलंपातास्वधेतिदिक् ॥ ६ ॥ स्त्रीस्यात्काचिन्मृणाल्यादिर्विवक्षापचयेयदि
॥ लंकाशेफालिकाटीकाधातकीपंजिकाढकी ॥ ७ ॥ सिध्रकासारिकाहिक्काप्राचीकोल्कापिपीलिका ॥ तिंदुकीकणि-
काभंगीसुरंगासूचिमादयः ॥ ८ ॥ पिच्छावितंडाकाकिण्यश्चूर्णिः शाणीद्रुणीदरत् ॥ सातिः कंथातथासंदीनाभीरा-
जसभापिच ॥ ९ ॥ झल्लरीचर्चरीपारीहोरालट्वाचसिध्मला ॥ लाक्षालिक्षाचगंडूषागृध्रसीचमसीमसी ॥ १० ॥ ॥
इतिस्त्रीलिंगशेषसंग्रहः ॥ ॥ पुंस्त्वेसभेदानुचराः सपर्यायाः सुरासुराः ॥ स्वर्गयागाद्रिमेघाब्धिद्रुकालासि
शरारयः ॥ ११ ॥ करगंडोष्ठदोर्दंतकंठकेशनखस्तनाः ॥ अन्हाहांताः क्ष्वेडभेदारात्रांताः प्रागसंख्यकाः ॥ १२ ॥ श्री
वेष्टाद्याश्चनिर्यासा असन्नंता अबाधिताः ॥ कसेरुजतुवस्तूनिहित्वातुरुविरामकाः ॥ १३ ॥ कषणभमरोपांता यद्यदं
ताअमीअथ ॥ पथनयसटोपांतागोत्राख्याश्चरणाह्वयाः ॥ १४ ॥ नाम्न्यकर्तरिभावेचघञ्जब्नङ्णघाथुचः ॥ ल्युः
कर्तरीमनिज्भावेकोघोः किः प्रादितोन्यतः ॥ १५ ॥ द्वंद्वेश्ववडवावश्ववडवानसमाहृते ॥ कांतः सूर्येंदुपर्यायपूर्वोयः-
पूर्वकोपिच ॥ १६ ॥ वटकश्चानुवाकश्चरल्लकश्चकुडंगकः ॥ पुंखोन्यूंखः समुद्गश्चविटपट्टधटाः खटाः ॥ १७ ॥ को-
ट्टारघट्टहट्टाश्चपिंडगोंडपिचंडवत् ॥ गडुः करंडोलगुडोवरंडश्चकिणोघुणः ॥ १८ ॥ दृतिसीमंतहरितोरोमंथोद्गी

कां॰
३

५३

थबुद्बुदाः ॥ कासमर्दोर्बुदः कुंदः फेनस्तूपौसपूपकौ ॥ १९ ॥ आतपः क्षत्रियेनाभिः कुणपः क्षुरकेदराः ॥ पूरक्षुरप्रचु
क्राश्चगोलहिंगुलपुद्गलाः ॥ २० ॥ वेतालमल्लभल्लाश्चपुरोडाशोपिपट्टिशः ॥ कुल्माषोरभसश्चैवसकटाहः पतद्ग्रहः
॥ २१ ॥ ॥ इतिपुल्लिंगशेषः ॥ ॥ द्विहीनेन्यच्चरवारण्यपर्णश्वभ्रहिमोदकम् ॥ शीतोष्णमांसरुधिरमुखा
क्षिद्रविणंबलम् ॥ २२ ॥ फलहेमशुल्बलोहसुखदुःखशुभाशुभम् ॥ जलपुष्पाणिलवणंव्यंजनान्यनुलेपनम् ॥ २३ ॥
कोट्याः शतादिसंख्यान्यावालक्षानियुतंचतत् ॥ द्व्यच्कमसिसुसन्नंतंयदनांतमकर्तरि ॥ २४ ॥ त्रांतंसलोपधंशिष्टंरा
त्रंप्राक्संख्ययान्वितम् ॥ पात्राद्यदंतैरेकार्थोद्विगुर्लक्ष्यानुसारतः ॥ २५ ॥ द्वंद्वैकत्वाव्ययीभावौपथः संख्याव्ययात्परः
षष्ठ्याश्छायाबहूनांचेद्विच्छायं संहतौसभा ॥ २६ ॥ शालार्थापिपराराजामनुष्यार्थादराजकात् ॥ दासीसभंनृपसभंर
क्षः सभमिमादिशः ॥ २७ ॥ उपज्ञोपक्रमांतश्चतदादित्वप्रकाशने ॥ कोपज्ञकोपक्रमादिकंथोशीनरनामसु ॥ २८ ॥ भा
वेनणकचिन्न्योन्येसमूहेभावकर्मणोः ॥ अदंतप्रत्ययाः पुण्यसुदिनाभ्यांत्वहः परः ॥ २९ ॥ क्रियाव्ययानांभेदकान्येक
त्वेप्युक्थतोटके ॥ चोचंपिच्छंगृहस्थूणंतिरीटंमर्मयोजनम् ॥ ३० ॥ राजसूयंवाजपेयंगद्यपद्येकृतौकवेः ॥ माणिक्य
भाष्यसिंदूरंचीरचीवरपंजरम् ॥ ३१ ॥ लोकायतंहरितालंविदलंस्थालबाह्लिकम् ॥ ॥ इतिनपुंसकशेषः ॥

सं

पुंनपुंसकयोः शेषोर्धर्चपिण्याककंटकाः ॥ ३२॥ मोदकस्तंडुकष्टंकः शाटकः खर्पटोर्बुदः ॥ पातक्लोद्योगचरकतमालामंडकानडः ॥ ३३॥ कुष्ठमुंडसीधुबुस्तंक्ष्वेडितंक्षेमकुट्टिमम् ॥ संगमंशतमानार्मशंबलाव्ययतांडवम् ॥ ३४॥ कवियंकंदकर्पासंपारावारंयुगंधरम् ॥ यूपंप्रग्रीवपात्रीवेयूषंचमसचिक्कसौ ॥ ३५॥ अर्धर्चादौघृतादीनांपुंस्त्वाद्यंवैदिकंध्रुवम् ॥ तन्नोक्तमिहलोकेपितच्चेदस्त्यस्तुशेषवत् ॥ ३६॥ ॥ इतिपुंनपुंसकशेषः ॥ ॥ स्त्रीपुंसयोरपत्यांताद्विचतुःषट्पदोरगाः ॥ जातिभेदाःपुमाख्याश्चस्त्रीयोगैःसहमल्लकः ॥ ३७॥ मुनिर्वशटकःस्वातिर्वर्णकोझाटिलिमंतुः ॥ मूषासृपाटीकर्कंधूर्यष्टिःशाटीकुटीकटी ॥ ३८॥ ॥ इतिस्त्रीपुंससंग्रहः ॥ ॥ स्त्रीनपुंसकयोर्भावक्रिययोःष्यञ्कचिच्चवुञ् ॥ औचित्यमौचितीमैत्रीमैत्र्यंवुञ्प्राग्उदाहृतः ॥ ३९॥ षष्ठ्यंतप्राक्पदाःसेनाछायाशालासुरानिशाः ॥ स्यान्नृसेनंश्वनिशंगोशालमितरेचदिक् ॥ ४०॥ आबंतोत्तरपदोद्विगुश्चापुंसिनश्चलुक् ॥ त्रिखट्वंचत्रिखट्वीचत्रितक्ष्यंचत्रितक्ष्यपि ॥ ४१॥ ॥ इतिस्त्रीनपुंसकसंग्रहः ॥ ॥ त्रिषुपात्रीपुटीवाटीपेटीकुवलदाडिमौ ॥ परलिंगंस्वप्रधानेद्वंद्वेतत्पुरुषेपिनत् ॥ ४२॥ अर्थांताःप्राद्यलंप्राप्तापन्नपूर्वाःपरोपगाः ॥ तद्धितार्थोद्विगुःसंख्यासर्वनामतदंतकाः ॥ ४३॥ बहुव्रीहिरदिङ्नाम्नामुन्नेयंतदुदाहृतं ॥ गुणद्रव्यक्रियायोगोपाधयःपरगामिनः ॥



कृतःकर्तर्यसंज्ञायांकृत्याःकर्तरिकर्मणि ॥ अणाद्यंतास्तेनरक्ताद्यर्थेनानार्थभेदकाः ॥ ४५॥ षट्संज्ञकास्त्रिषुसमायुष्मदस्मत्तिङव्ययम् ॥ परंविरोधेशेषंतुज्ञेयंशिष्टप्रयोगतः ॥ ४६॥ ॥ इतिलिंगादिसंग्रहवर्गः ॥ ॥ इत्यमरसिंहकृतौनामलिंगानुशासने ॥ सामान्यकांडस्तृतीयः सांग एव समर्थितः ॥ ३॥ ॥ इत्यमरकोशेतृतीयकांडःसमाप्तः ॥ ॥ श्रीमज्जगदीश्वरार्पणमस्तु ॥ ॥ शुभमस्तु ॥ ॥ श्रीजगदीश्वरप्रसन्नोस्तु ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥

हें पुस्तक मुंबईंत बापू सदाशिवशेट शेल्ये हेगिष्टे श्रीवर्धनकर यांच्या छापखान्यांत छापिलें. शके १७१७ युवनामसंवत्सरज्ये·शु·७

